श्रेष्ठिनान्दुकस्य गृहे निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः। ततश्च सुचिरं कालं यथेच्छया देशान्तरं भ्रान्त्वा पुनस्तत्रैव स्वपुरं समागम्य श्रेष्ठिनान्दुकं प्राह। भो श्रेष्ठिन् दीयतां मे सा निक्षेपतुला। स आह। भो नास्ति सा। त्वदीया तुला मूषकैर्भक्षिता। तच्छ्रुत्वा लक्ष्मणो प्राह। भो नान्दुक नास्ति ते दोषो यदि सा मूषकैर्भक्षितेति। ईदृगेवायं संसारः। न किंचिदत्र शाश्वतमस्ति। परमहं नद्यां स्नानार्थं गमिष्यामि। तत् त्वमात्मीयं शिशुमेनं धनदेवनामानं मया सह स्नानोपकरणहस्तं प्रेषयेति। सो ऽपि नान्दुको निजचौर्यभयाल्लक्ष्मणस्य शङ्कितः एवं पुत्रमुवाच। वत्स पितृव्यो ऽयं ते लक्ष्मणः स्नानार्थं नद्यां यास्यति। तद्गम्यतामनेन सह स्नानोपकरणमादायेति। अहो साध्विदमुच्यते।

न भक्त्या कस्यचित् को ऽपि प्रियं प्रकुरुते नरः।
मुक्त्वा भयं प्रलोभं वा कार्यकारणमेव च ॥४६२॥

तथा च। अत्यादरो भवेद्यत्र कार्यकारणवर्जितः।
तत्र शङ्का प्रकर्तव्या परिणामे सुखावहा ॥४६३॥

अथासौ नान्दुकपुत्रः स्नानोपकरणमादाय प्रहृष्टमना लक्ष्मणेन सह प्रस्थितः। तथानुष्ठिते स लक्ष्मणः स्नात्वा तं धनदेवं नान्दुकपुत्रं नदीतटगुहायां प्रक्षिप्य तद्द्वारं वृहच्छिलयावछाद्य च सत्वरं नान्दुकगृहमागतः। पृष्टश्च तेन वणिजा। भो लक्ष्मण कथ्यतां कुत्र मे शिशुर्यस्त्वया सह नदीं गतः। स आह। नदीतटाच्छ्येनेनापहृत इति। श्रेष्ठ्याह। मिथ्यावादिन् किं क्वचिच्छ्येनो बालकं हर्तुं शक्नोति। तत् समर्पय मे सुतं। अन्यथा राजकुले निवेदयिष्यामि। स आह। भो सत्यवादिन् श्येनो बालकं न नयति। तथा मूषका अपि भारलोहघटितां तुलां न भक्षयन्ति। तदर्पय मे तुलां यदि दारकेन तव प्रयोजनं। एवं तौ विवदमानौ द्वावपि राजद्वारमागतौ। अत्र च नान्दु

कस्तारस्वरेण प्रोवाच। भो अब्रह्मण्यमब्रह्मण्यं वर्तते। मम शिशुरनेन चौरेणापहृतः। अथ धर्माधिकारिणस्तं लक्ष्मणमूचुः। भो समर्प्यतां श्रेष्ठिसुतः। स आह। किं करोमि। पश्यतो मे नदीतटाच्छ्येनेनापहृतः। तच्छ्रुत्वा ते प्रोचुः। भो न सत्यमभिहितं भवता। किं श्येनः पञ्चदशवार्षिकं पुत्रं हर्तुं समर्थः स्यात्। लक्ष्मणो विहस्याह। भो भो श्रूयतां मद्वचनं।

तुलां लोहसहस्रस्य खादन्ति यत्र मूषकाः।
गजं तत्र हरेच्छ्येनो बालके को ऽत्र विस्मयः ॥४६४॥

ते प्रोचुः। कथमेतत्। लक्ष्मणो ऽपि सर्वतुलावृत्तान्तमकथयत्। तच्छ्रुत्वा ते विहस्य नान्दुकस्य चरितं लक्ष्मणस्य च। द्वावपि तौ परस्परं सम्बोध्य तुलाशिशुप्रदानेन सन्तोषितौ। अतो ऽहं ब्रवीमि।

तुलां लोहसहस्रस्य खादन्ति यत्र मूषकाः।
गजं तत्र हरेच्छ्येनो बालके को ऽत्र विस्मयः ॥४६५॥

करटकः पुनरब्रवीत्। तन्मूर्ख पिङ्गलकवृत्तं सञ्जीवकप्रसादमसहमानेन त्वयैतत् कृतं। अहो साध्विदमुच्यते।

प्रायेणात्र कुलान्वितानकुलजाः श्रीवल्लभं दुर्भगाः।
दातारं कृपणा ऋजूननृजवो वित्ते स्थितं निर्धनाः।
वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनः।
नानशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खाः सदा ॥४६६॥

तथा च। मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः।
व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥४६७॥

अथैवं वदतोस्तयोः सञ्जीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा तस्य खरनखरप्रहारतो गतायुर्वसुन्धरापृष्ठे पतितः। अथ तं गतायुषमवलोक्य पिङ्गलकस्तद्गुणस्मरणादार्द्रहृदयः सन् प्रोवाच। भो मया पापेन सञ्जीवकं व्यापादयता न युक्तं कृतं। यतो विश्वासघातादन्य

न्नास्ति पापतरं कर्म। उक्तं च।

भूमिक्षये राजविनाश एव भृत्यस्य वा बुद्धिमतो विनाशे।
न युक्तमुक्तं ह्यनयोः समत्वं नष्टापि भूमिः सुलभा न भृत्याः ॥४६८॥

अपरं मयैष शष्पभुक्साचिव्यं प्रापितः। पश्चात् स्वयमेव हतः। एतच्च पापतरं कर्म कृतं। उक्तं च।

इतः सदैत्यप्राप्तश्रीर्नेत एवार्हति क्षयं।
विषवृक्षो ऽपि संवृद्धः स्वयं छेत्तुमसाम्प्रतं ॥४६९॥

तथा मया सभामध्ये सो ऽयं सदैव शंसितः। तत् किं कथयिष्यामि परेषां गुरुसन्मानपूजितमित्राणामग्रे। उक्तं च।

उक्तो भवति यः पूर्वं गुणवानिति संसदि।
न तस्य दोषो कर्तव्यः प्रतिज्ञाभङ्गभीरुणा ॥४७०॥

एवं विलपन्तं दमनकः समुपेत्य सहर्षमिदमाह। देव कातरतमस्तवैष न्यायः। यच्छष्पभुजं द्रोहकारिणं हत्वेत्थं शोचसि। तन्नैतदुपपन्नं भूभुजां। उक्तं च यतः।

पिता वा यदि वा भ्राता पुत्रो भार्याथवा सुहृत्।
प्राणद्रोहं यदा गच्छेद्धन्तव्यो नास्ति पातकं ॥४७१॥

तथा च।

राजा घृणी ब्राह्मणः सर्वभक्षी स्त्री चात्रपा दुष्टमतिः सहायः।
प्रेष्यः प्रतीपो ऽधिकृतः प्रमादी त्याज्या अमी यश्च कृतं न वेत्ति॥

अपि च।

सत्यानृता च परुषा प्रियवादिनी च हिंस्रा दयालुरपि चार्थपरा वदान्या।
भूरिव्यया प्रचुरवित्तसमागमा च वेश्याङ्गनेव नृपनीतिरनेकरूपा॥

अपि च। अकृतोपद्रवः कश्चिन्महानपि न पूज्यते।
पूजयन्ति नरा नागान्न तार्क्ष्यं नागघातिनं ॥४७४॥

तथा च। अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।

गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥४७५॥

एवं तेन सम्बोधितः पिङ्गलकः सञ्जीवकशोकं परित्यज्य। दमनकं साचिव्यपदमारोप्य। स्वयं सुखेन राज्यमकरोत्।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके
मित्रभेदो नाम प्रथमं तन्त्रं
समाप्तं

---

अथेदमारभ्यते मित्रसम्प्राप्तिर्नाम द्वितीयं तन्त्रं। तस्यायमाद्यः श्लोकः।

असाधना अपि प्राज्ञा बुद्धिमन्तो बहुश्रुताः।
साधयन्त्याशु कार्याणि काकाखुमृगकूर्मवत्॥१॥

तद्यथानुश्रूयते। अस्ति दक्षिणात्ये जनपदे मिहिलारोप्यं नाम नगरं। तस्य नातिदूरस्थो महोच्छ्रायवान् नानाविहङ्गोपभुक्तफलः कीटावृतकोटरश्छायास्वासितपथिकजनो महान्यग्रोधपादपो ऽस्ति। युक्तमथवा प्रोक्तं च।

छायासुप्तमृगः शकुन्तनिवहैर्विष्वग्विलुप्तच्छदः।
कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः।
विश्रब्धो मधुपैर्निपीतकुसुमः श्लाघ्यः स एव द्रुमः।
सर्वाङ्गैर्बहुसत्वसङ्गसुखदो भूतारभूतो ऽपरः॥२॥

तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म। स कदाचित् प्राणयात्रार्थं पुरमुद्दिश्य प्रचलितो यावत् पश्यति। तावज्जालहस्तो ऽतिकृष्णतनुः स्फुटितचरण ऊर्ध्वकेशो यमकिङ्कराकारो लुब्धकः सम्मुखो बभूव। अथ तं दृष्ट्वा शङ्कितमना व्याचिन्तयत्। अहो ऽयं दुरात्माद्य मदाश्रयवटपादपसम्मुखो गच्छति। तन्न ज्ञायते किमद्य वटनिवासिनां विहङ्गमानां सङ्क्षयो भविष्यति न वा। एवं बहुविधं विचिन्त्य तत्क्षणान्निवृत्य तमेव वटपादपं गत्वा तान् सर्वान् विहङ्गमान् प्रोवाच। भो अयं दुरात्मा लुब्धको जालतण्डुलहस्तः समभ्येति। तत्

सर्वथा तस्य न विश्वसनीयं। एष जालं प्रसार्य तण्डुलान् प्रक्षेप्स्यति। ते तण्डुला भवद्भिः सर्वैरपि कालकूटसदृशा द्रष्टव्याः। एवं वदतस्तस्य स लुब्धकस्तत्र वटतल आगत्य तज्जालं प्रसार्य सिन्दुवारसदृशांस्तण्डुलान् प्रक्षिप्य नातिदूरं गत्वा निभृतं स्थितः। अथ ये तत्र पक्षिणः स्थितास्ते लघुपतनकवाक्यार्गलया निवारितास्तांस्तण्डुलान् हलाहलाङ्कुरानिव वीक्षमानास्तस्थुः। अत्रान्तरे चित्रग्रीवो नाम कपोतराजः सहस्रपरिवारः प्राणयात्रार्थं परिभ्रमंस्तांस्तण्डुलान् दूरतोऽप्यपश्यत्। अथ लघुपतनकेन निवार्यमाणोऽपि जिह्वालौल्यात् तद्भक्षणार्थमपतत्। सपरिवारो निबद्धश्च। अथवा साध्विदमुच्यते।

जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनां।
अचिन्तितो वधोऽज्ञानां मीनानामिव जायते ॥३॥

अथवा दैवप्रतिकूलतया भवत्येवं। न कश्चिदस्य दोषः। उक्तं च।

पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्।
रामेणापि कथं न हेमहरिणस्यासम्भवो लक्षितः।
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं।
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥४॥

तथा च। कृतान्तपाशबद्धानां दैवोपहतचेतसां।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥५॥

अत्रान्तरे लुब्धकस्तान् बद्धान् विज्ञाय प्रहृष्टमनाः प्रोद्यतयष्टिर्वधार्थं प्रधावितः। चित्रग्रीवोऽप्यात्मानं सपरिवारं बद्धं मत्वा लुब्धकमायान्तमवलोक्य तान् कपोतानूचे। अहो न भेतव्यं। उक्तं च यतः।

व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते।
स तेषां पारमभ्येति तत्प्रभावादसंशयं ॥६॥

तथा च। सम्पत्तौ च विपत्तौ च महतामेकरूपता।
उदये सविता रक्तो रक्तश्चास्तमने तथा ॥७॥

तत् सर्वे वयं हेलयोड्डीय सज्जाला अस्यादर्शनं गत्वा मुक्तिं प्राप्नुमः। नो चेद्भयविह्वलाः सन्तो हेलया समुत्पतनं न करिष्यथ। तदा मृत्युमवाप्स्यथेति। उक्तं च।

तन्तवो ऽप्यायता नित्यं तन्तवो बहुलाः समाः।
बहून्नुद्गादयो ऽजस्रं निघ्नन्त्यगमानपि ॥८॥

तथानुष्ठिते लुब्धकस्य जालमादायाकाशेन गच्छतस्तान् भूतलस्थो लुब्धकः पर्यधावत्। तत ऊर्द्ध्वनयनः श्लोकमेनमपठत्।

अक्लेशादिव चिन्तितमुपतिष्ठति सिद्धमेव पुण्यवतां।
उड्डीयापुण्यवतां गच्छन्ति कपोतकाः पश्य ॥९॥

अथवा। जालमादाय गच्छन्ति संहताः पक्षिणो ऽप्यमी।
यावच्च विवदिष्यन्ते पतिष्यन्ति न संशयः ॥१०॥

लघुपतनको ऽपि प्राणयात्राक्रियां त्यक्त्वा किमत्र भविष्यतीति कुतूहलात् तत्पृष्ठलग्नो ऽनुससार। अथ दृष्ट्यगोचरान् कपोतान् विज्ञाय लुब्धको निराशः श्लोकमेनं पठन् निवृत्तः।

न हि भवति यन्न भाव्यं हि भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य तु भवितव्यता नास्ति ॥११॥

तथा च। पराङ्मुखे विधौ चेत् स्यात् कथञ्चिद्द्रविणागमः।
तत् सो ऽन्यदपि सङ्गृह्य याति शङ्खनिधिर्यथा ॥१२॥

तदास्तां तावद्विहङ्गमामिषलोभो यावत् कुटुम्बजीवनोपायभूतं जालमपि मे नष्टं। चित्रग्रीवो ऽपि लुब्धकमदर्शनीभूतं विज्ञाय तान् कपोतानुवाच। भो निवृत्तः स दुरात्मा लुब्धकः। तत् सर्वैरपि स्वस्थैर्गम्यतां महिलारोप्यस्य नगरस्य प्रागुत्तरदिग्भागे। तत्र मम सुहृद्धिरण्यको नाम मूषकः सर्वेषां पाशच्छेदनं करिष्यति। उक्तं च यतः।

सर्वेषामेव मर्त्यानां व्यसने समुपस्थिते।
वाङ्मात्रेणापि साहाय्यं मित्रादन्यो न सन्दधे ॥१३॥

एवं ते कपोताश्चित्रग्रीवेण सम्बोधिता हिरण्यकविलदुर्गं प्रापुः । हिरण्यको ऽपि सहस्रमुखविलदुर्गं प्रविष्टः सन्नकुतोभयः सुखेनास्ते ।

अथ च । अनागतं भयं दृष्ट्वा नीतिशास्त्रविशारदः ।
अवसन् मूषकस्तत्र कृत्वा शतमुखं विलं ॥१४॥

अथ चित्रग्रीवो ऽपि विलदुर्गद्वारं गत्वा तारस्वरेण प्रोवाच । भो भो मित्र हिरण्यक सत्वरमागच्छागच्छ । महती मे व्यसनावस्था वर्तते । तदाकर्ण्य हिरण्यको ऽपि विलदुर्गान्तर्गतः प्रोवाच । भो भो को भवान् । किमर्थमायातः । कीदृक् ते व्यसनावस्थानं । तत् कथ्यतामिति । तच्छ्रुत्वा चित्रग्रीव आह । चित्रग्रीवो नाम कपोतराजो ऽहं ते सुहृत् । तत् सत्वरमागच्छ । गुरुतरं प्रयोजनमस्ति । तदाकर्ण्य स पुलकिततनुः प्रहृष्टात्मा स्थिरमनास्त्वरमाणो निःक्रान्तः । अथवा साध्विदमुच्यते ।

सुहृदः स्नेहसम्पन्ना लोचनानन्ददायिनः ।
गृहे गृहवतां नित्यमागच्छन्ति कृतात्मनां ॥१५॥
आदित्यस्योदयं ज्ञाततांबूलं भारतीकथा ।
इष्टा भार्या सुमित्रं च अपूर्वाणि दिने दिने ॥१६॥

तथा च । भवने सुहृदो यस्य समागच्छन्ति नित्यशः ।
चित्ते च तस्य सौख्यस्य न किंचित् प्रतिमं सुखं ॥१७॥

अथ चित्रग्रीवं सपरिवारं पाशबद्धमालोक्य हिरण्यकः सविषादमिदमाह । भो किमेतत् । स आह । भो जानन्नपि किमेवं पृच्छसि । उक्तं च यतः ।

यस्माच्च येन च यदा च यथा च यच्च यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तदा च तथा च तच्च तावच्च तत्र च कृतान्तवशादुपैति ॥

तत् प्राप्तं मयैतद्बन्धनं जिह्वालौल्यात् । साम्प्रतं त्वं पाशविमोक्षणं कुरु । मा विलम्ब । तदाकर्ण्य हिरण्यकः प्राह । अहो साध्विदमुच्यते ।

अर्द्धार्द्धाद्योजनशतादामिषं वीक्षते खगः ।
सो ऽपि पार्श्वस्थितं दैवाद्बन्धनं नैव पश्यति ॥ १९ ॥

तथा च ।

रविनिशाकरयोर्ग्रहपीडनं गजभुजङ्गविहङ्गमबन्धनं ।
मतिमतां च निरीक्ष्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥

तथा च । व्योमैकान्तविहारिणो ऽपि विहगाः सम्प्राप्नुवन्त्यापदं ।
बध्यन्ते निपुणैरगाधसलिलान्मीनाः समुद्रादपि ।
दुर्णीतं किमिहास्ति किं च सुकृतं कः स्थानलाभे गुणः ।
कालो हि व्यसनप्रसारितभुजो गृह्णाति दूरादपि ॥ २१ ॥

एवमुक्त्वा चित्रग्रीवस्य पाशं छेत्तुमुद्यतः । चित्रग्रीव आह । मा मैवं कुरु । प्रथमं मम भृत्यानां पाशछेदः क्रियतां । ततो ममेति । तच्छ्रुत्वा हिरण्यकः कुपितः प्राह । भो न युक्तमुक्तं भवता । यतः स्वामिनो ऽनन्तरं भृत्यः । स आह । भद्र मा मैव वद । एते सर्वे ऽपि वराका मदाश्रयाः । अपरमपि परित्यज्य समागताः । तत् कथमेतावन्मात्रमपि सन्मानं न करोमि । उक्तं च ।

यः सन्मानं सदा धत्ते भृत्यानां क्षितिपो ऽधिकं ।
वित्ताभावे ऽपि तं दृष्टास्ते त्यजन्ति न कर्हिचित् ॥ २२ ॥

तथा च । विश्वासः सम्पदां मूलं तेन यूथपतिर्गजः ।
सिंहो मृगाधिपत्ये ऽपि न मृगैः परिवार्यते ॥ २३ ॥

अपरं मत्पाशछेदे कदाचित् तव दन्तभङ्गो भवति । अथवा स पापात्मा लुब्धकः समभ्येति । तन्नूनं मम नरकपातः । उक्तं च ।

सदाचारेषु भृत्येषु संसीदत्सु च यः प्रभुः ।
सुखी स्यान्नरकं याति परत्रेह च सीदति ॥ २४ ॥

तच्छ्रुत्वा प्रहृष्टो हिरण्यकः प्राह । भो वेद्म्यहं राजधर्ममेनं । परं तव परीक्षेयं कृता । तत् सर्वेषां पाशछेदं विधास्यामि । भवानप्यनेन

विधिना बहुकपोतपरिवारितो भविष्यति। उक्तं च।

कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा।
सम्भाव्यः स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥२५॥

एवमुक्त्वा सर्वेषां पाशच्छेदं कृत्वा हिरण्यकश्चित्रग्रीवमाह। मित्र गम्यतामधुना स्वाश्रयं प्रति। भूयो ऽपि व्यसने सम्प्राप्ते समागन्तव्यमिति संप्रेष्य। एवमुक्त्वा स्वदुर्गं प्रविष्टः। चित्रग्रीवो ऽपि सपरिवारः स्वाश्रयमगमत्। अथवा साध्विदमुच्यते।

मित्रवान् साधयत्यर्थान् दुःसाध्यानपि वै जनः।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥२६॥

लघुपतनको ऽपि वायसस्तं चित्रग्रीवबन्धनमोक्षमवलोक्य विस्मयमना व्यचिन्तयत्। अहो बुद्धिरस्य हिरण्यकस्य शक्तिश्च दुर्गसामग्री च। तदीदृगेव विधिर्विहङ्गमानां बन्धात् मोक्षक्रियासमाचारः। अहं च न कस्यचिद्विश्वसिमि चलप्रकृतिश्च। तथाप्येनं मित्रं करोमि। उक्तं च।

अपि सम्पूर्णतायुक्तैः कर्तव्याः सुहृदो बुधैः।
नदीशः परिपूर्णो ऽपि मित्रोदयमुपेक्षते ॥२७॥

तदेवं सम्प्रधार्य पादपादवतीर्य बिलद्वारमाश्रित्य चित्रग्रीववच्छब्देन हिरण्यकमाहूतवान्। एह्येहि भो हिरण्यक एहि। तच्छब्दं श्रुत्वा हिरण्यको व्यचिन्तयत्। किमन्यो ऽपि कश्चित् सावशेषबन्धनः कपोतस्तिष्ठति। येन मां व्याहरति। आह च। भो को भवान्। स आह। अहं लघुपतनको नाम वायसः। तच्छ्रुत्वा हिरण्यको विशेषादन्तर्लीनः। आह च। भद्र द्रुतं गम्यतामस्मात् स्थानात्। वायस आह। अहं तव पार्श्वे गुरुकार्येण समागतः। तत् किं न क्रियते मया सह सन्दर्शनं। हिरण्यक आह। न मे ऽस्ति त्वया सह सङ्गमेन प्रयोजनं। वायस आह। भो चित्रग्रीवस्य बन्धमोक्षणं त्वत्सकाशाद्दृष्ट्वा मे महती प्रीतिः सञ्जाता। तत् कदाचिन्मम बन्धने सञ्जाते

तव पार्श्वान्मुक्तिर्भविष्यति। तत् क्रियतां मया सह मैत्रीति। हिरण्यक आह। अहो त्वं भोक्ता। अहं भोज्यभूतः। तत् का त्वया सह मम मैत्री। उक्तं च।

ययोरेव समं वित्तं ययोरेव समं कुलं।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥२८॥

तथा च। यो मित्रं कुरुते मूढ आत्मनो ऽसदृशं कुधीः।
हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जने ॥२९॥

तद्गम्यतामिति। वायस आह। भो हिरण्यक एषो ऽहं तव दुर्गद्वारमुपविष्टः। यदि त्वं मैत्रीं न करोषि तत् प्राणमोक्षणं तवाग्रे करिष्यामि। अथवा प्रायोपवेशनं मे स्यादिति। हिरण्यक आह। भो कथं त्वया पूर्ववैरिणा सह मैत्रीं करोमि। उक्तं च।

वैरिणा न हि सन्दध्यात् सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकं ॥३०॥

वायस आह। भवता सह मम दर्शनमपि नास्ति। कुतो वैरं। तत् किमनुचितं वदसि। हिरण्यक आह। द्विविधं वैरं भवति सहजं कृत्रिमं च। तत् सहजवैरी त्वमस्माकं। उक्तं च यतः।

कृत्रिमं नाशमायाति वैरं द्राक् कृत्रिमैर्गुणैः।
प्राणदानं विना वैरं सहजं याति न क्षयं ॥३१॥

वायस आह। भो द्विविधस्यापि वैरस्य लक्षणं श्रोतुमिच्छामि। तत् कथ्यतां। हिरण्यक आह। भो कारणेन निवृत्तं कृत्रिमं। तत् तदर्होपकारकारणाद्गच्छति। स्वाभाविकं पुनः कथमपि न गच्छति। तद्यथा नकुलसर्पाणां। शष्पभुग्नखायुधानां। जलानलयोः। देवदैत्यानां। सारमेयमार्जाराणां। सपत्नीनां। ईश्वरदरिद्राणां। सिंहगजानां। लुब्धकहरिणानां। श्रोत्रियभ्रष्टक्रियाणां। पतिव्रताकुलटानां। मूर्खपण्डितानां। सज्जनदुर्जनानां। नित्यं वैरं भवति। न च कस्यचित्

केनापि को ऽपि व्यापादितः। तथापि प्राणान् सन्तापयन्ति। वायस आह। भो अकारणमेतत्। श्रूयतां मे वचनं।

कारणान्मित्रतां याति कारणादेति शत्रुतां।
तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता ॥३२॥

तस्मात् कुरु मया सह समागमं मित्रधर्मार्थं च। हिरण्यक आह। त्वया सह मम कः समागमः। भो श्रूयतां नीतिसर्वस्वं।

सकृद्दुष्टं हि यो मित्रं पुनः सन्धातुमिच्छति।
स मृत्युमुपगृह्णाति गर्भादश्वतरी यथा ॥३३॥

अथवा गुणवानहं। न मे कश्चिद्वैरयातनां करिष्यति। एतदपि न सम्भाव्यं। उक्तं च।

सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः।
मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिं।
छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलं।
अज्ञानावृतचेतसामतिरुषां को ऽर्थस्तिरश्चां गुणैः ॥३४॥

वायस आह। अस्त्येतत्। तथापि श्रूयतां।

उपकाराच्च लोकानां निमित्तान्मृगपक्षिणां।
भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात् सतां ॥३५॥

तथा च। मृद्घट इव सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति।
सुजनस्तु कनकघट इव दुर्भेदः सुकरसन्धिश्च ॥३६॥

अपि च। इक्षोरग्रात् क्रमशः पर्वणि पर्वणि यथा रसविशेषः।
तद्वत् सज्जनमैत्री विपरीतानां तु विपरीता ॥३७॥

तथा च।

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात्।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव मैत्री खलु सज्जनानां ॥३८॥

तत् साधुरेवाहं। अपरं त्वां शपथादिभिर्निर्भयं करोमि। हिरण्यक

आह। न मे ऽस्ति त्वदीयशपथैः प्रत्ययः। उक्तं च यतः।

शपथैः संहितस्यापि न विश्वासं रिपोर्व्रजेत्।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण सूदितः ॥ ३९ ॥

तथा च। न विश्वासं विना शत्रुर्देवानामपि सिध्यति।
विश्वासात् त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ४० ॥

अन्यच्च। बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत्।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च ॥ ४१ ॥

तथा च। सुसूक्ष्मेणापि रन्ध्रेण प्रविशत्यन्तरं रिपुः।
नाशयेच्च शनैः पश्चात् प्लवं सलिलपूरवत् ॥ ४२ ॥

अपि च। न विश्वसेदविश्वस्ते विश्वस्ते ऽपि न विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ४३ ॥

तथा च। न वध्यते ह्यविश्वस्तो दुर्बलो ऽपि बलोत्कटैः।
विश्वस्ताश्चाशु वध्यन्ते बलवन्तो ऽपि दुर्बलैः ॥ ४४ ॥

पुनश्च। सुकृतिर्विष्णुगुप्तस्य मित्राप्तिर्भार्गवस्य च।
बृहस्पतेरविश्वासो नीतिसन्धौ त्रिधास्थितः ॥ ४५ ॥

तथा च। महताप्यर्थसारेण यो विश्वसिति शत्रुषु।
भार्यासु च विरक्तासु तदन्तं तस्य जीवितं ॥ ४६ ॥

तच्छ्रुत्वा लघुपतनको ऽपि निरुत्तरो विहितश्चिन्तयामास। अहो बुद्धिप्रागल्भ्यमस्य नीतिविषये। अथवा। अत एवास्योपरि मे मैत्री पक्षपातः। आह च। भो हिरण्यक।

सतां साप्तपदं मैत्रमित्याहुर्विबुधा जनाः।
तस्मात् त्वं मित्रतां प्राप्तो वचनं मम तच्छृणु ॥ ४७ ॥

तद्दुर्गस्थेनापि त्वया मया सह नित्यमेवालापगुणदोषसम्भाषितगोष्ठीकथा सर्वदा कर्तव्या। यद्येवं न विश्वसिषि। तच्छ्रुत्वा हिरण्यको ऽपि व्यचिन्तयत्। विदग्धवचनो ऽयं दृश्यते लघुपतनकः सत्यवाक्यश्च।

तद्युक्तमनेन सह मैत्रीकारणं । सुभाषितगोष्ठी शुभा भविष्यति । आह च । यद्येवं तदस्तु त्वया सह मैत्री । परं कदाचिन्मम दुर्गे चरणपातो ऽपि त्वया न कर्तव्यः । उक्तं च ।

भीतभीतः पुरा शत्रुर्मन्दं मन्दं विसर्पति ।
भूमौ प्रहेलया पश्चाज्जारहस्तो ऽङ्गनास्विव ॥ ४८ ॥

तच्छ्रुत्वा वायस आह । भद्र यद्येवं तद्भवतु । ततः प्रभृति द्वावपि तौ सुभाषितगोष्ठीसुखमनुभवन्तौ तिष्ठतः । परस्परं कृतोपकारौ कालं नयतः । लघुपतनको ऽपि मांसखण्डानि सुमृष्टानि हिरण्यकार्थमानयति । हिरण्यको ऽपि विशिष्टांस्तण्डुलानन्यानपि भक्षविशेषान् लघुपतनकार्थमानयति । अथवा युज्यते द्वाभ्यामप्येतत् । उक्तं च ।

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणं ॥ ४९ ॥

तथा च । नोपकारं विना प्रीतिः कथञ्चित् कस्यचिद्भवेत् ।
उपयाचितदानेन यतो देवा अभीष्टदाः ॥ ५० ॥

अपि च । तावत् प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरं ॥ ५१ ॥
पश्य दानस्य माहात्म्यं सद्यः प्रत्ययकारकं ।
यत्प्रभावादपि द्वेषी मित्रतां याति तत्क्षणात् ॥ ५२ ॥

तथा च ।

पुत्रादपि प्रियतरं नियमेन मन्ये दानं पशोरपि विवेकविवर्जितस्य ।
दत्ते खले ऽपि निखिलं खलु येन दुग्धं नित्यं ददाति महिषी ससुतापि पश्य ॥

किं बहुना । प्रीतिं निरन्तरां कृत्वा दुर्भेद्यां नखमांसवत् ।
मूषको वायसश्चैव गतावेकान्तमित्रतां ॥ ५४ ॥

एवं स मूषकस्तदुपकाररञ्जितस्तथा विश्वस्तो यथा तस्य पक्षमध्ये प्रविष्टस्तेनैव सह सर्वदा गोष्ठीमनुभवति । अथान्यस्मिन्नहनि वायसो

ऽश्रुपूर्णनेत्रो ऽभ्येत्य तमुवाच। भो हिरण्यक विरक्तिः सञ्जाता मे साम्प्रतमस्य देशस्योपरि। तदन्यत्र यास्यामि। हिरण्यक आह। भद्र किं विरक्तेः कारणं। सो ऽब्रवीत्। भद्र श्रूयतां। अत्र देशे महोत्पातानावृष्ट्या दुर्भिक्षं सञ्जातं। दुर्भिक्षवाञ्जनो बुभुक्षापीडितः को ऽपि बलिमात्रमपि न प्रयच्छति। अपरं गृहे गृहे बुभुक्षितैर्जनैर्विहङ्गमानां बन्धनार्थं पाशाः प्रगुणीकृतास्तिष्ठन्ति। अहमप्यायुःशेषतया पाशेन बद्ध उद्धरितः। एतद्विरक्तेः कारणं। हिरण्यक आह। अथ क्व भवान् प्रस्थितः। स प्राह। अस्ति दक्षिणापथे वनगहनमध्ये महासरः। तत्रास्ति मे तवाप्यधिकः परमसुहृन्मन्थरको नाम कूर्मः। स च मे मत्स्यमांसखण्डानि दास्यति। तद्भक्षणात् तेन सह सुभाषितगोष्ठीसुखेन कालं नेष्यामि। नाहमत्र विहङ्गानां पाशबन्धात् क्षयं द्रष्टुमिच्छामि। उक्तं च।

अनावृष्टिहते देशे शस्ये च प्रलयं गते।
धन्यास्तात न पश्यन्ति देशभङ्गं कुलक्षयं ॥५५॥

तथा च। विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥५६॥

हिरण्यक आह। यद्येवं तदहमपि त्वया सह तत्रैवागमिष्यामि। यतो ममापि महद्दुःखं प्रवर्तते। वायस आह। भो तव किं दुःखं। तत् कथ्यतां। हिरण्यक आह। भो मित्र बहु वक्तव्यमस्ति। अत्र विषये तत्रैव गत्वा सर्वं सविस्तरं कथयिष्यामि। वायस आह। अहं तावदाकाशगतिर्भवान् भूचरः। तत् कथं भवतो मया सहागमनं। स आह। यदि मत्प्राणै रक्षितैः प्रयोजनं। तदात्मपृष्ठमारोप्य मां तत्र प्रापयिष्यसि। नान्यथा मम गतिरस्ति। तच्छ्रुत्वा सानन्दं वायस आह। यद्येवं तद्धन्यो ऽहं यद्भवन्तं महान्तं कालं नयामि। अहं सम्पातादिकानष्टावुड्डीनगतिविशेषान् वेद्मि। उक्तं च।

सम्पातं च प्रपातं च महापातं निपातनं।
चक्रं तिर्यक् चोर्द्ध्वमष्टमं लघुसंज्ञकं ॥५७॥

तस्मात् समारुह मत्पृष्ठं। येन सुखेन तत् सरः प्रापयामि। तथानुष्ठिते हिरण्यकस्तत्क्षणादेव तस्योपरि समारूढः। सो ऽपि तमादाय सम्पातोड्डयनेन प्रस्थितः। ततः शनैः शनैस्तेन सह तत् सरः प्रचलितः। एतस्मिन्नन्तरे लघुपतनकं मूषिकाधिष्ठितं दूरतो ऽपि दृष्ट्वा देशकालविदसामान्यः काको ऽयमिति मत्वा सत्वरं मन्थरको जले प्रविष्टः। लघुपतनको ऽपि तीरस्थतरुकोटरे हिरण्यकं मुक्त्वा स्वयं शाखाग्रमारुह्य तारस्वरेण प्रोवाच। भो मन्थरक मन्थरक आगच्छागच्छ। तव मित्रमहं लघुपतनको नाम वायसश्चिरात् सोत्कण्ठहृदयः समायातः। तदागत्यालिङ्गय मां। उक्तं च यतः।

किं चन्दनैः सकर्पूरैस्तुहिनैः शीतलैश्च किं।
सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीं ॥५८॥

तथा च। केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयं।
आपदां च परित्राणं शोकसन्तापभेषजं ॥५९॥

तच्छ्रुत्वा निपुणतरं परिज्ञाय पुलकिततनुरानन्दाश्रुपूरितनयनो मन्थरकः सत्वरं सलिलान्निष्क्रम्य प्रोवाच। एह्येहि मित्र आलिङ्गय मां। चिरकालात् त्वं न मया परिज्ञातः। तेनाहं सलिलान्तं प्रविष्टः। उक्तं च। यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितं।
न तेन संविदं कुर्यादित्युवाच बृहस्पतिः ॥६०॥

एवमुक्त्वा लघुपतनको वृक्षादवतीर्य तमालिङ्गितवान्। तथा साधु चेदमुच्यते।

अमृतस्य प्रवाहैः किं कायक्षालनसङ्गतैः।
चिरान्मित्रपरिष्वङ्गो यो ऽसौ मूल्यविवर्जितः ॥६१॥

एवं तौ द्वावपि विहितालिङ्गनौ पुलकितशरीरौ वृक्षादधः समुपवि

ष्टावात्मचरितवृत्तान्तं परस्परं प्रोचतुः। हिरण्यको ऽपि मन्थरकस्य प्रणामं कृत्वा वायसाभ्यासे समुपविष्टः। अथ तं समालोक्य मन्थरको लघुपतनकमुवाच। को ऽयं मूषकः। कस्माच्च त्वया भक्ष्यभूतो ऽपि पृष्ठमारोप्यात्र समानीतः। तन्नात्र स्वल्पकारणेन भाव्यं। तच्छ्रुत्वा लघुपतनक आह। भो हिरण्यको नाम मूषको ऽयं मम सुहृत्। द्वितीयमिव जीवितं। तत् किं बहुना।

पर्जन्यस्य यथा धारा यथा च दिवि तारकाः।
सिकतारेणवो यद्वत् संख्यया परिवर्जिताः।
गुणाः संख्यापरित्यक्तास्तद्वदस्य महात्मनः।
परं निर्वेदमापन्नः सम्प्राप्तो ऽयं तवान्तिकं ॥६२॥

मन्थरक आह। किमस्य वैराग्यस्य कारणं। वायस आह। पृष्टो मया तत्रैव। परमनेनाभिहितं। बहु वक्तव्यमस्ति। तत् तत्रैव गतः कथयिष्यामि। ममापि न निवेदितं। तद्भद्र हिरण्यक इदानीं निवेद्य तामुभयोरपि तदात्मनो वैराग्यकारणं।

कथा ॥१॥ हिरण्यकः कथयति। अस्ति दाक्षिणात्ये जनपदे मिहिलारोप्यं नाम नगरं। तस्य नातिदूरे मठायतनं भगवतो महेश्वरस्य। तत्र च ताम्रचूडो नाम परिव्राजकः प्रतिवसति स्म। स च नगरे भिक्षाटनं कृत्वा प्रभूतं सिद्धमन्नमुपादाय मठं गत्वा प्राणयात्रां समाचरति। भिक्षाशेषं च तत्रैव भिक्षापात्रे निधाय तद्भिक्षापात्रं नागदन्ते विलम्बयित्वा पश्चात् स्वपिति। प्रत्यूषे तदन्नं कर्मकाराणां दत्त्वा तत्रैव देवतायतने सम्मार्जनोपलेपनमण्डनादिकं कर्म समाज्ञापयति। अथान्यस्मिन्नहनि ममानुचरैर्निवेदितं। स्वामिन् ताम्रचूडमठे सिद्धमन्नं प्रभूतं नागदन्तावलम्बितं सदैव तिष्ठति। तद्वयं भक्षितुं न शक्नुमः। स्वामिनः पुनरगम्यं किमपि नास्ति। तत् किं भ्रमणेनान्यत्र। अद्य तत्र गत्वा यथेच्छया भुंज्महे तव प्रसादात्। किमन्यत्र वृथाश्रमेण। तदाकर्ण्याहं

सकलयूथपरिवृतस्तत्क्षणादेव तत्र मठे गतः। उत्प्लुत्य च तस्मिन् भिक्षापात्रे समारूढः। तत्र पक्वान्नभक्ष्यविशेषाणि भृत्याणामाहारं दत्वा पश्चात् स्वयमेव भक्षयामि। सर्वेषां तृप्तौ जातायां भूयो ऽपि स्वस्थानं गच्छामः। एवं नित्यमेवाहं सपरिवारस्तदन्नं भक्षयामि। परिव्राजको ऽपि यथाशक्ति रक्षति। परं यदैव निद्रान्तरितो भवति। तदाहं तत्रारुह्यात्मकृत्यं करोमि। अथ कदाचित् तेन मम रक्षार्थं महान् जर्जरवंशः समानीतः। तेन सुप्तो ऽपि मम भयाद्भिक्षापात्रं ताडयति। अहमप्यभक्षिते ऽप्यन्ने प्रहारभयादपसर्पामि। एवं तेन सह सकलां रात्रिं यावद्विग्रहपरस्य कालो व्रजति। अथान्यस्मिन्नहनि तस्य मठे बृहत्स्फिग्नाम तत्सुहृत् परिव्राजकस्तीर्थयात्राप्रसङ्गेन पान्थः प्राघूर्णकः समायातः। तं दृष्ट्वा प्रत्युत्थानविधिना सम्भाव्यप्रतिपत्तिपूर्वकमभ्यागतक्रियया नियोजितः। ततश्च रात्रावेकत्र संस्तरे द्वावपि तौ प्रसुप्तौ धर्मकथां कर्तुमारब्धौ। अथ बृहत्स्फिक्सुभाषितगोष्ठीषु स ताम्रचूडो मम त्रासाद्व्याक्षिप्तमना जर्जरवंशेन भिक्षापात्रं ताडयन् तस्य शून्यं प्रतिवचनं प्रयच्छति। तं प्रति न किमप्युदाहरति। अथासावभ्यागतः परं कोपमुपागतस्तमुवाच। भो ताम्रचूड परिज्ञातस्त्वं मया सम्यग्न सुहृत्। तेन मया सह साह्लादं न जल्पसि। तदधुना रात्रावपि त्वदीयं मठं त्यक्त्वान्यत्र यास्यामि। उक्तं च यतः।

एह्यागच्छ समाविशासनमिदं कस्माच्चिराद्दृश्यसे।
का वार्त्ता ह्यतिदुर्बलो ऽसि कुशलं प्रीतो ऽस्मि ते दर्शनात्।
एवं ये समुपागतान् प्रणयिनः प्रह्लादयन्त्यादरात्।
तेषां युक्तमशङ्कितेन मनसा हर्म्याणि गन्तुं सदा ॥ ६३॥

तथा च। गृही यत्रागतं दृष्ट्वा दिशो वीक्षेत वाप्यधः।
तत्र ये सदने यान्ति ते शृङ्गरहिता वृषाः ॥ ६४॥

अन्यच्च। नाभ्युत्थानक्रिया यत्र नालापा मधुराक्षराः।

गुणदोषकथा नैव तस्य कर्म्यं न गम्यते ॥६५॥

तदेकमठप्राप्त्यापि त्वं गर्वितः। तत्र क्व सुहृत्स्नेहः। नैतद्वेत्सि यन्मठाश्रयव्याजेन नरकोपार्जनं क्रियते। उक्तं च।

नरकाय मतिस्ते चेत् पौरोहित्यं समाचर।
वर्षं यावत् किमन्येन मठचिन्तया दिनत्रयं ॥६६॥

तन्मूढ शोचितव्ये ऽप्यर्थे त्वं गर्वितः। अथ तच्छ्रुत्वा भयत्रस्तमनास्ताम्रचूडस्तमुवाच। भगवन् मैवं वद। न त्वया समानो मम सुहृत् क्वचिदस्ति। तच्छ्रूयतां गोष्ठीशैथिल्यकारणं। एष दुरात्मा मूषकः प्रोन्नतस्थाने धृतमपि भिक्षापात्रमुत्प्लुत्यारोहति भिक्षाशेषं च तत्रस्थं भक्षयति। तदभावाद्देवगृहे सन्मार्जनादिक्रिया न भवति। तन्मूषकत्रासार्थमेतेन वंशेन मुहुर्मुहुर्भिक्षापात्रं ताडयामि। नान्यत् कारणमिति। अपरमेतत् कुतूहलं पश्यास्य दुरात्मनः। यन्मार्जारमर्कटादयो ऽपि तिरस्कृता अस्योत्पतनेन। बृहत्स्फिगाह। अथ ज्ञायते विलं तस्य क्वचित्प्रदेशे। ताम्रचूड आह। भगवन् न वेद्मि सम्यक्। स आह। नूनं निधानस्योपरि तस्य विलं। निधानोष्मणा प्रकूर्दति। उक्तं च यतः।

उष्मा हि वित्तजो वृद्धिं तेजो नयति देहिनां।
किं पुनस्तस्य सम्भोगात् त्यागः कर्मसमन्वितः ॥६७॥

तथा च। नाकस्माच्छाण्डिली माता विक्रीणाति तिलैस्तिलान्।
लुञ्चितानितरैर्येन हेतुरत्र भविष्यति ॥६८॥

था ताम्रचूड आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चित्
२॥ स्थाने देवरतं नगरं सज्जतरं। तत्र कदाचिदहं प्रावृट्काले मेघपीडोपशमननिमित्तं कञ्चिद्ब्राह्मणवासमुपेत्य मे ऽतिस्वल्पं स्थलं प्रार्थितवान्। ततश्चैतद्वचनात् तत्र शुश्रूषितः सुखेन देवतामर्चयन् तिष्ठामि। अथान्यस्मिन्नहनि प्रत्यूषे प्रबुद्धो ऽहं ब्राह्मणब्राह्मणीसंवादं दत्ताव

धानः शृणोमि। तत्र ब्राह्मण आह। ब्राह्मणि प्रभात उत्तरायणसंक्रान्तिरनन्तदानफला भविष्यति। तदहं सवरं प्रतिग्रहार्थं ग्रामान्तरं यास्यामि। त्वया ब्राह्मणस्यैकस्य भगवतः सूर्यस्योद्देशेन तिला दातव्याः। अथ तच्छ्रुत्वा सा ब्राह्मणी परुषतरवचनैस्तं भर्त्समाना प्राह। कुतस्ते दारिद्र्योपहतस्य ब्राह्मणभोजनप्राप्तिः। तत् किमेवं ब्रुवाणो न लज्जसे। अपि च न मया तव हस्ताग्रलग्नया क्वचिदपि लब्धं सुखं। न मिष्टान्नस्यास्वादनं न च हस्तपादकर्णकण्ठादिभूषणं प्राप्तं। तच्छ्रुत्वा भयत्रस्तो ऽपि ब्राह्मणो मन्दं मन्दं प्राह। ब्राह्मणि नैतद्युज्यते वक्तुं। उक्तं च।

ग्रासादपि तदर्द्धं च कस्मान्नो दीयते ऽर्थिषु।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥६९॥

तथा च। ईश्वरा भूरिद्रव्येण यल्लभन्ते फलं किल।
दरिद्रस्तच्च काकिण्या प्राप्नुयादिति नः श्रुतं ॥७०॥

तथा च।

दाता लघुरपि सेव्यो भवति न कृपणो महानपि समृद्ध्या।
कूपो ऽन्तःस्वादुजलः प्रीत्यै लोकस्य न समुद्रः ॥७१॥

तथा च। अकृतत्यागमहिम्ना मिथ्या किं राजराजशब्देन।
गोप्तारं न निधीनां महयन्ति महेश्वरं विबुधाः ॥७२॥

सदा दानपरिक्षीणः शस्त एव करीश्वरः।
अदानः पीनगात्रश्च निन्द्यत एव गर्दभः ॥७३॥

सुशीलो ऽपि सुवृत्तो ऽपि यात्यदानादधो घटः।
पुनः कुब्जापि काणापि दानादुपरि कर्कटी ॥७४॥

तथा च। यच्छन् जलमपि जलदो वल्लभतामेति सकललोकस्य।
नित्यं प्रसारितकरो मित्रो ऽपि न वीक्षितुं शक्यः ॥७५॥

एवं ज्ञात्वा दारिद्र्याभिभूतैरपि स्वल्पात् स्वल्पतरं देयं काले पात्रे च।

गुणदोषकथा नैव तस्य कर्म्ये न गम्यते ॥६५॥

तदेकमठप्राप्त्यापि त्वं गर्वितः। तत्र क्व सुहृत्स्नेहः। नैतद्वेत्सि यन्मठाश्रयव्याजेन नरकोपार्जनं क्रियते। उक्तं च।

नरकाय मतिस्ते चेत् पौरोहित्यं समाचर।
वर्षं यावत् किमन्येन मठचित्या दिनत्रयं ॥६६॥

तन्मूढ शोचितव्ये ऽप्यर्थे त्वं गर्वितः। अथ तच्छ्रुत्वा भयत्रस्तमनास्ताम्रचूडस्तमुवाच। भगवन् मैवं वद। न त्वया समानो मम सुहृत् क्वचिदस्ति। तच्छ्रूयतां गोष्ठीशैथिल्यकारणं। एष दुरात्मा मूषकः प्रोन्नतस्थाने धृतमपि भिक्षापात्रमुत्प्लुत्यारोहति भिक्षाशेषं च तत्रस्थं भक्षयति। तदभावाद्देवगृहे सन्मार्जनादिक्रिया न भवति। तन्मूषकत्रासार्थमेतेन वंशेन मुहुर्मुहुर्भिक्षापात्रं ताडयामि। नान्यत् कारणमिति। अपरमेतत् कुतूहलं पश्यास्य दुरात्मनः। यन्मार्जारमर्कटादयो ऽपि तिरस्कृता अस्योत्पतनेन। वृहत्स्फिगाह। अथ ज्ञायते विलं तस्य क्वचित्प्रदेशे। ताम्रचूड आह। भगवन् न वेद्मि सम्यक्। स आह। नूनं निधानस्योपरि तस्य विलं। निधानोष्मणा प्रकूर्दति। उक्तं च यतः।

उष्मा हि वित्तजो वृद्धिं तेजो नयति देहिनां।
किं पुनस्तस्य सम्भोगात् त्यागः कर्मसमन्वितः ॥६७॥

तथा च। नाकस्माच्छाण्डिली माता विक्रीणाति तिलैस्तिलान्।
लुञ्चितानितरैर्येन हेतुरत्र भविष्यति ॥६८॥

कथा ॥२॥ ताम्रचूड आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चित् स्थाने देवरतं नगरं सज्ञतरं। तत्र कदाचिदहं प्रावृट्काले मेघपीडोपशमननिमित्तं कश्चिद्ब्राह्मणावासमुपेत्य मे ऽतिस्वल्पं स्थलं प्रार्थितवान्। ततश्चैतद्वचनात् तत्र शुश्रूषितः सुखेन देवतामर्चयन् तिष्ठामि। अथान्यस्मिन्नहनि प्रत्यूषे प्रबुद्धो ऽहं ब्राह्मणब्राह्मणीसंवादं दत्ताव

धानः शृणोमि । तत्र ब्राह्मण श्राह । ब्राह्मणि प्रभात उत्तरायणास्तं ङ्क्रान्तिरनन्तदानफला भविष्यति । तदहं सवरं प्रतिग्रहार्थं ग्रामान्तरं यास्यामि । त्वया ब्राह्मणस्यैकस्य भगवतः सूर्यस्योद्देशेन तिला दातव्याः । श्रथ तच्छ्रुत्वा सा ब्राह्मणी परुषतरवचनैस्तं भर्त्समाना प्राह । कुतस्ते दारिद्रोपहतस्य ब्राह्मणभोजनप्राप्तिः । तत् किमेवं ब्रुवाणो न लज्जसे । श्रपि च न मया तव हस्ताग्रलग्नया क्वचिदपि लब्धं सुखं । न मिष्टान्नस्यास्वादनं न च हस्तपादकर्णकण्ठादिभूषणं प्राप्तं । तच्छ्रुत्वा भयत्रस्तो ऽपि ब्राह्मणो मन्दं मन्दं प्राह । ब्राह्मणि नैतद्युज्यते वक्तुं । उक्तं च ।

ग्रासादपि तदर्द्धं च कस्मान्नो दीयते ऽर्थिषु ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥६९॥

तथा च । ईश्वरा भूरिद्रव्येण यल्लभन्ते फलं किल ।
दरिद्रस्तच्च काकिण्या प्राप्नुयादिति नः श्रुतं ॥७०॥

तथा च ।

दाता लघुरपि सेव्यो भवति न कृपणो महानपि समृद्ध्या ।
कूपो ऽन्तःस्वादुजलः प्रीत्यै लोकस्य न समुद्रः ॥७१॥

तथा च । श्रकृतत्यागमहिम्ना मिथ्या किं राजराजशब्देन ।
गोप्तारं न निधीनां महयन्ति महेश्वरं विबुधाः ॥७२॥
सदा दानपरिक्षीणः शस्त एव करीश्वरः ।
श्रदानः पीनगात्रश्च निन्द्यत एव गर्दभः ॥७३॥
सुशीलो ऽपि सुवृत्तो ऽपि यात्यदानादधो घटः ।
पुनः कुब्जापि काणापि दानादुपरि कर्कटी ॥७४॥

तथा च । यच्छन् जलमपि जलदो वल्लभतामेति सकललोकस्य ।
नित्यं प्रसारितकरो मित्रो ऽपि न वीक्षितुं शक्यः ॥७५॥

एवं ज्ञात्वा दारिद्राभिभूतैरपि स्वल्पात् स्वल्पतरं देयं काले पात्रे च ।

उक्तं च यतः।

सत्पात्रं महती श्रद्धा देशे काले यथोचिते।
यद्दीयते विवेकज्ञैस्तदनन्ताय कल्पते ॥७६॥

तथा च प्रोक्तं कैश्चित्।

अतितृष्णा न कर्तव्या तृष्णां नैव परित्यजेत्।
अतितृष्णाभिभूतस्य शिखा भवति मस्तके ॥७७॥

कथा ॥३॥ ब्राह्मणी प्राह। कथमेतत्। ब्राह्मणः कथयति। अस्ति कस्मिंश्चिद्वनोद्देशे कश्चित् पुलिन्दः। स च पापर्द्धिं कर्तुं वनं प्रति प्रस्थितः। अथ तेन प्रसर्पता महानञ्जनपर्वतशिखराकारः क्रोडः समासादितः। तं दृष्ट्वा कर्णाकृष्टनिशितसायकेन समाहतः। तेनापि कोपाविष्टचेतसा बालेन्दुद्युतिदंष्ट्राग्रेण पाटितोदरः पुलिन्दो गतासुर्भूतले प्रापतत्। अथ लुब्धकं व्यापाद्य शूकरो ऽपि शरप्रहारमात्रवेदनया पञ्चत्वमुपागतः। एतस्मिन्नन्तरे कश्चिदासन्नमृत्युः शृगाल इतस्ततो निराहारतया पीडितः परिभ्रमंस्तं प्रदेशमाजगाम। यावद्वराहपुलिन्दौ पञ्चत्वमुपागतौ द्वावपि पश्यति। तावत् प्रहृष्टो व्यचिन्तयत्। भो अनुकूलो मे विधिः। तेनैतदचिन्तितं भोजनमुपस्थितं। अथवा साध्विदमुच्यते।

अकृते ऽप्युद्यमे पुंसामन्यजन्मकृतं फलं।
शुभाशुभं समभ्येति विधिना सन्नियोजितं ॥७८॥

तथा च। यस्मिन् देशे च काले च वयसा यादृशेन च।
कृतं शुभाशुभं कर्म तत् तथा तेन भुज्यते ॥७९॥

तदहं तथा भक्षयामि यथा बहून्यहानि मे प्राणयात्रा भविष्यतीति। तत् तावदेनं स्नायुपाशं धनुःकोटिगतं भक्षयामि। उक्तं च।

शनैः शनैश्च भोक्तव्यं स्वीयं वित्तमुपार्जितं।
रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥८०॥

इत्येवं मनसा निश्चित्य चापचटितकोटिं मुखमध्ये क्षिप्त्वा स्नायुं भक्षयितुं प्रवृत्तः। ततश्च त्रुटिते पाशे तालुप्रदेशं निदार्य चापकोटिर्मस्तके शिखावन्निष्क्रान्ता। सो ऽपि तद्वेदनया तत्क्षणान्मृतः। अतो ऽहं ब्रवीमि।

अतितृष्णा न कर्तव्या तृष्णां नैव परित्यजेत्।
अतितृष्णाभिभूतस्य शिखा भवति मस्तके ॥८१॥

स पुनरप्याह। ब्राह्मणि न श्रुतं भवत्या।

आयुः कर्म च वित्तं च विद्या निधनमेव च।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥८२॥

अथैवं सा तेन प्रबोधिता ब्राह्मणी प्राह। भो कान्त यद्येवं तदस्ति मे गृहे स्तोकतिलराशिः। ततस्तिलान् लुण्ठयित्वा तिलचूर्णेन ब्राह्मणं भोजयिष्यामीति। तस्यास्तद्वचनमाकर्ण्य ब्राह्मणो ग्रामान्तरं गतः। सापि तिलान् गृहस्थितानुष्णोदकेन सम्मर्द्य लुञ्चित्वा सूर्यतपे दत्तवती। अत्रान्तरे तस्या गृहकर्मव्यग्रायास्तेषां तिलानां मध्ये कश्चित् सारमेयो मूत्रोत्सर्गं चकार। ततस्तद्दृष्ट्वा सा व्यचिन्तयत्। अहो पश्य नैपुण्यं विधेः पराङ्मुखीभूतस्य। यदेतानपि तिलानभोज्यान् कृतवान्। तदहमेतान् समादाय कस्यचिद्गृहं गत्वा लुञ्चितैरलुञ्चितान् प्रार्थयामि। सर्वो ऽपि जनो ऽनेन विधिना दास्यतीति। अथ तांस्तिलान् सूर्पे निधाय गृहाद्गृहं प्रविशन्तीदमाह। भो गृह्णातु कश्चिदलुञ्चितैस्तिलैर्लुञ्चितांस्तिलान्। अथ यस्मिन् गृहे ऽहं भिक्षार्थं प्रविष्टः। तत्र गृहे सापि तिलानादाय विक्रयं कर्तुं प्रविष्टा पूर्वोक्तमेवाह। अथ तद्गृहगृहिण्या प्रहृष्टयालुञ्चितैर्लुञ्चितास्तिला गृहीताः। तथा च प्रवृत्ते तस्या भर्ता समायातः। तेन साभिहिता। भद्रे किमिदमिति। सा कथयति। समर्था मया तिला लब्धा लुञ्चितालुञ्चितैरिति। ततः स वितर्क्याब्रवीत्। कस्य सम्बन्धिन इमे तिलाः। तत्र तत्सुतः

कामन्दकिराह। शाण्डिलीमातुः। सो ऽब्रवीत्। भद्रे सातीव निपुणा व्यवहारकुशला च। ततस्त्याज्या एते तिलाः। यतः।

नाकस्माच्छाण्डिलीमाता विक्रीणाति तिलैस्तिलान्।
लुञ्चितानितरैर्येन हेतुरत्र भविष्यति ॥८३॥

तन्निश्चितं। निधानोष्मजनितात्र कूर्दनशक्तिरस्य। एवमुक्त्वा स वृहत्स्फिग्भूयो ऽपि प्राह। अथ ज्ञायते तस्य गमनागमनमार्गः। ताम्रचूड आह। भगवन् ज्ञायते। यत एकाकी न समायाति। किं त्वसङ्ख्ययूथपरिवृतः पश्यतो मे अभ्यन्नितस्ततः सर्वजनेन सहागच्छति याति च। वृहत्स्फिगाह। अस्ति किञ्चित् खनित्रकं। स आह। वाढमस्त्येषा सर्वलोहमयी स्वहस्तिका। अभ्यागत आह। तर्हि प्रत्यूषे त्वया मया सह बोद्धव्यं। येन द्वावपि चरणमिलितायां भूमौ तत्पदानुसारिणौ गच्छावः। मयापि तस्य दुरात्मनस्तद्वज्रपातसदृशं वचनमाकर्ण्य चिन्तितं। अहो नष्टो ऽस्मीति। यतः साभिप्रायाण्यस्य वचांसि श्रूयन्ते। नूनं यथा निधानं ज्ञातं। तथा दुर्गमप्यस्माकं ज्ञास्यति दुष्टः। एतदभिप्रायादेव ज्ञायते। उक्तं च।

सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य।
हस्ततुलयापि निपुणाः पलपरिमाणं विजानन्ति ॥८४॥

तथा च।

वाञ्छैव सूचयति पूर्वतरं भविष्यं पुंसां यदन्यतनुजं शुभमार्तिदं वा।
विज्ञायते शिशुरजातकलापचिह्नः प्रत्युत् पदैरपसरन् सरसः कलापी॥

ततो ऽहं भयत्रस्तमना दुर्गमार्गं परित्यज्य सपरिवारो ऽन्यमार्गेण गन्तुं प्रवृत्तो यावदग्रतो गच्छामि। तावत् सम्मुखो वृहत्कायो मार्जारः समायाति। स च मूषकवृन्दमवलोक्य तन्मध्ये सहसोत्पपात। अथ ते मूषका मां कुमार्गगामिनं गर्हयन्तो हतशेषा रुधिरप्लावितवसुन्धरास्तदेव दुर्गं प्रविष्टाः। अथवा साध्विदमच्यते।

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां
पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात्।
व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन् मृगः
कूपान्तं पतितः करोति विमुखे वामं विधौ पौरुषं ॥८६॥

तथा च। कैवर्तकर्कशकरग्रहणाच्च्युतो ऽपि
जाले पुनर्निपतितः शफरो वराकः।
जालात् पुनर्विगलितो गलितो बकेन
वामे विधौ वत कुतो व्यसनान्निवृत्तः ॥८७॥

अन्यच्च। भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः।
तृप्तस्तत् पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थस्तिष्ठति दैवमेव हि नृणां वृद्धौ क्षये कारणं ॥८८॥

तथाहमेको ऽन्यत्र गतः। शेषा मूढतया तत्रैव दुर्गं प्रविष्टाः। एतस्मिन्नन्तरे स दुष्टपरिव्राजको रुधिरविन्दुचर्चितां भूमिमवलोक्य तेनैव दुर्गमार्गेणागत्योपस्थितः। ततश्च स्वहस्तिकया खनितुमारब्धः। अथ तेन खनता प्राप्तं तन्निधानं। यस्योपरि सदैवाहं कृतवसतिः। यस्योष्मणा महादुर्गमपि गच्छामि। ततो हृष्टमनास्ताम्रचूडमिदमूचे परिव्राजकः। भो भगवन् स्वपिहीदानीं विर्विशङ्कः। तस्योष्मणा स मूषको जागरणं ते करोति। एवमुक्त्वा तन्निधानमादाय मठाभिमुखं प्रतस्थे। अहमपि यावत् तत्रागच्छामि तावदरमणीयमुद्वेगकारकं तत्स्थानं वीक्षितुमपि न शक्नोमि। कथं मे स्यान्मनसः प्रशान्तिः। एवं चिन्तयतो मे महता कष्टेन स दिवसो व्यतिक्रान्तः। अथास्तमिते ऽर्के सोद्वेगो ऽपि निरुत्साहस्तस्मिन् मठे सपरिवारः प्रविष्टः। अथास्मत्परिग्रहशब्दमाकर्ण्य ताम्रचूडो भूयो ऽपि भिक्षापात्रं जर्जरवंशेन ताडयितुमारब्धः। अथासौ वृहत्स्फिक् प्रोवाच। सखे किमद्यापि निःश

ह्नो न निद्रां गच्छसि। स आह। भगवन् भूयो ऽपि सपरिवारः समायातो नूनं दुष्टमूषकः। तस्य भयाज्जर्जरवंशेन भिक्षापात्रं ताडयामि। ततो विहस्याभ्यागतः प्राह। सखे मा भैषीः। वित्तेन सह गतो ऽस्य कूर्दनोत्साहः। सर्वेषामपि जन्तूनामेवेयं स्थितिः। उक्तं च।

यदुत्साही सदा मर्त्यः परा भवति यो जनान्।
यदुद्धतं वदेद्वाक्यं तत् सर्वं वित्तजं फलं ॥८९॥

अथाहं तच्छ्रुत्वा कोपाविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितो ऽप्राप्त एव भूमौ निपपात। तद्दृष्ट्वासौ मे शत्रुर्विहस्य ताम्रचूडमुवाच। भो पश्य पश्य कुतूहलं। उक्तं च।

अर्थेन बलवान् सर्वो ह्यर्थयुक्तः स पण्डितः।
पश्यैनं मूषकं व्यर्थं स्वजातिसमतां गतं ॥९०॥

तत् स्वपिहि त्वं निर्गतविशङ्कः। यदस्योत्पतनकारणं तदावयोर्हस्तगतं। अथवा साध्विदमुच्यते।

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
तथार्थेन विहीनो ऽत्र पुरुषो नाम धारकः ॥९१॥

तच्छ्रुत्वा मनसा मया चिन्तितं। सत्यमस्य मदीयशत्रोर्वचनं। अङ्गुलमात्रमप्युत्कूर्दनशक्तिर्मम नास्ति। धिगर्थेन हीनं पुरुषस्य जीवितं। उक्तं च।

अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः।
उच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥९२॥

यथा काकयवाः प्रोक्ता यथारण्यभवास्तिलाः।
नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः ॥९३॥

सतो ऽपि हि न राजन्ते दरिद्रस्येतरे गुणाः।
आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥९४॥

न तथा बाध्यते लोके प्रकृत्या निर्धनो जनः।
यथा द्रव्याणि सम्प्राप्य तैर्विहीनः सुखे स्थितः ॥९५॥

शुष्कस्य कीटखातस्य वह्निदग्धस्य सर्वतः ।
तरोरिव दरिद्रस्य न वरं जन्मिनः फलं ॥ ९६ ॥
शङ्कनीया हि सर्वत्र निःप्रतापा दरिद्रता ।
उपकर्तुमपि प्राप्तं निःस्वं मन्यन्ति कुर्कुरं ॥ ९७ ॥
उन्नम्योन्नम्य तत्रैव दरिद्राणां मनोरथाः ।
हृदयेषु विलीयन्ते विधवास्त्रीस्तनाविव ॥ ९८ ॥
व्यक्ते ऽपि वासरे नित्यं दौर्गत्यतमसावृतः ।
अग्रतो ऽपि स्थितो यत्नान्न केनापीह दृश्यते ॥ ९९ ॥

इत्येवमहं विलप्य भग्नोत्साहस्तत् स्वनिधानं गल्लोपधानीयकृतं विलोकयन् स्वदुर्गं प्रभातकाले गतः। ततश्च ते मद्भृत्या गच्छन्तो मिथो जल्पन्ति। अहो असमर्थो ऽयमुदरपूरणे ऽस्माकं। केवलमस्य पृष्ठलग्नानां विडालादिविपत्तयः। तत् किमनेनाराधितेन। उक्तं च यतः।

यत्सकाशान्न लाभः स्यात् केवलाः स्युर्विपत्तयः ।
स स्वामी दूरतस्त्याज्यो विशेषाच्छ्रमजीविभिः ॥ १०० ॥

एवं तेषां वचांसि मार्गे श्रुत्वा स्वदुर्गे प्रविष्टो यावन्न कश्चिन्मम सम्मुखो ऽभ्येति। तावन्मया चिन्तितं। अहो धिगियं दरिद्रता। अथवा साध्विदमुच्यते।

मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजं ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ १०१ ॥

वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारिवाः ।
पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तरं मृगाः ।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं सेवकाः ।
सर्वः स्वार्थवशाज्जनो हि रमते न कस्य को वल्लभः ॥ १०२ ॥

एवं मे विचिन्तयतस्ते भृत्या मम शत्रूणां सेवकाः संवृत्ताः। ते च मामेकाकिनमसमर्थं दृष्ट्वा विडम्बनां कुर्वन्ति। अथ मयैकाकिना योग

निद्रां गतेन भूयो ऽपि चिन्तितं। अद्य रात्रावेकाकी तस्य कुतश्चिस्विनः समाश्रयं गत्वा। तत्र गण्डुपरायणकृतां वित्तपेटीं शनैः शनैर्विदार्य। तस्य निद्रावशमुपगतस्य स्वदुर्गे तद्वित्तमानयामि। येन भूयो ऽपि मे वित्तप्रभावेनाधिपत्यं पूर्ववद्भवति। उक्तं च।

व्यथयन्ति परं चेतो मनोरथशतैर्जनाः।
नानुष्ठानैर्विहीनाः स्युः कुलजा विधवा इव ॥१०३॥
दौर्गत्यं देहिनां दुःखमपमानकरं परं।
येन स्वैरपि मन्यन्ते जीवन्तो ऽपि मृता इव ॥१०४॥
दैन्यस्य पात्रतामेति परिभूतेः परं पदं।
विपदामाश्रयः शश्वद्दौर्गत्यकलुषीकृतः ॥१०५॥
लज्जन्ते बान्धवास्तेन सम्बन्धं गोपयन्ति च।
मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दिकाः ॥१०६॥
मूर्तेर्लाघवमेवैतदपायानामिदं गृहं।
पर्यायो मरणस्यायं निर्धनत्वं शरीरिणां ॥१०७॥
अजाखरखुरोत्सर्गमार्जनीरेणुवर्जनैः।
दीपखट्वापछायेव त्यज्यते निर्धनो जनः ॥१०८॥
शौचविशिष्टयाप्यस्ति किञ्चित् कार्यं क्वचिन्मृदा।
निर्धनेन धवेनेह न तु किञ्चित् प्रयोजनं ॥१०९॥
अधनो दातुकामो ऽपि सम्प्राप्तो धनिनां गृहं।
मन्यते याचको ऽयं धिग्दारिद्र्यं खलु देहिनां ॥११०॥

ततो वित्तापहारं विदधतो यदि मम मृत्युः स्यात्। तथापि शोभनं। उक्तं च। स्ववित्तहरणं दृष्ट्वा यो हि रक्षत्यसून्नरः।
पितरो ऽपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिं ॥१११॥
तथा च। गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा।
प्राणांस्त्यजति यो युद्धे तस्य लोकाः सनातनाः ॥११२॥

इत्येवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशमुपगतस्य परिव्राजकस्य पेटा यां मया महच्छिद्रं कृतं यावत्। तावत् स दुष्टतापसः प्रबुद्धः। ततश्च जर्जरवंशप्रहारेण तेनाहं शिरसि ताडितः कथञ्चिदायुःशेषतया न मृतः। उक्तं च।

प्राप्तव्यमर्थं लभते मनुष्यो देवो ऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं नहि तत् परेषां॥

काककूर्मौ पृच्छतः। कथमेतत्। हिरण्यकः कथयति। अस्ति कथ
कस्मिंश्चिन्नगरे सागरदत्तो नाम वणिक्। तत्सूनुना रूपकशतेन वि ॥४
क्रीयमाणं पुस्तकं गृहीतं। तस्मिंश्च लिखितमस्ति।

प्राप्तव्यमर्थं लभते मनुष्यो देवो ऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत् परेषां॥

तद्दृष्ट्वा सागरदत्तेन सूनुः पृष्टः। पुत्र कियता मूल्येनैतत् पुस्तकं गृहीतं। सो ऽब्रवीत्। तात रूपकशतेन। तच्छ्रुत्वा सागरदत्तो ऽब्रवीत्। धिग्मूर्खत्वं लिखितैकश्लोकपादं पुस्तकं रूपकशतेन यद्गृह्णासि। एतया बुद्ध्या कथं द्रव्योपार्जनं करिष्यसि। तदद्य प्रभृति त्वया मम गृहे न प्रवेष्टव्यं। एवं निर्भर्त्स्य गृहान्निःकाशितः। स च तेन निर्वेदेन विप्रकृष्टं देशान्तरं गत्वा किमपि नगरमासाद्यावस्थितः। अथ कतिपयैर्दिवसैस्तन्नगरनिवासिना केनचिदसौ पृष्टः। कुतो भवानागतः। किन्नामधेयो वेति। असाववदत्। प्राप्तव्यमर्थं लभते मनुष्य इति। अथान्येनापि पृष्टस्तथैवाब्रवीत्। एवं यः कश्चित् पृच्छति। तस्येदमेवोत्तरं वितरति। एवं च तस्य नगरस्य मध्ये प्राप्तव्यमर्थमिति तस्य प्रसिद्धं नाम सञ्जातं। अथ राजकन्या चन्द्रवती नामाभिनवरूपसम्पन्ना सखीद्वितीयैकस्मिन् महोत्सवदिवसे नगरं निरीक्षमाणा तिष्ठति। तत्रैव च कश्चिद्राजपुत्रो ऽतीव रूपसम्पन्नः मनोरमश्च तस्याः कथमपि दैववशाद्दृष्टिगोचरे गतः। तद्दर्शनसमकालमेव मकरध्वजकुसु

मत्वाणैरभिहतया तया निद्रा सख्यभिहिता। हे सखि व्यर्थतां यान्ति तावद्यौवनदिनानि। पितापि मां न कस्मैचित् प्रयच्छति। तद्यथा ममाद्यानेन सह समागमो भवति। तथा त्वया प्रतिपत्तव्यं। एवं च श्रुत्वा सा सखी शीघ्रं तत्सकाशं गत्वाब्रवीत्। अहो अहं चन्द्रवत्या त्वदन्तिकं प्रेषिता। भणितं च त्वां प्रति तया। यन्मम त्वद्दर्शनान्मनोभवेन पश्चिमावस्था कृता। तद्यदि शीघ्रं मदन्तिकं न समेष्यसि। तदा मे मरणमेव। इति श्रुत्वा तेनाभिहितं। यद्यवश्यं मया तत्रागन्तव्यं। तत् कथय केनोपायेन प्रवेष्टव्यं। अथ सख्याभिहितं। रात्रौ सौधोत्सङ्गावलम्बितया दृढवरत्रया त्वया तत्रारोढव्यं। सो ऽब्रवीत्। यद्येवं निश्चयो भवत्यास्तदहमेवं करिष्यामि। इति निश्चित्य सखी चन्द्रवती सकाशं गता। अथागतायां रजन्यां स राजपुत्रः स्वचेतसा व्यचिन्तयत्। अहो महदकृत्यमेतत्। उक्तं च।

गुरोः सुतां मित्रभार्यां स्वामिसेवकगेहिनीं।
यो गच्छति पुमान् लोके तमाहुर्ब्रह्मघातकं ॥११५॥

अपरं च। अयशः प्राप्यते येन येन चाधोगतिर्भवेत्।
स्वर्गाच्च भ्रश्यते येन तत् कर्म न समाचरेत् ॥११६॥

इति सम्यग्विचार्य स तत्सकाशं न जगाम। अथ प्राप्तव्यमर्थः पर्यटन् धवलगृहपार्श्वे रात्रावलम्बितवरत्रां दृष्ट्वा। कौतुकाविष्टहृदयस्तामालम्ब्याधिरूढः। तया च राजपुत्र्या स एवायमिति स्वस्थचित्तया स्नानभोजनपानाच्छादनादिना सम्मान्य तेन सह शयनतलमाश्रितया तदङ्गस्पर्शसञ्जातहर्षरोमाञ्चितगात्रयोक्तं। भद्र युष्मद्दर्शनमात्रानुरक्तया मया तुभ्यमात्मा प्रदत्तो ऽयं त्वद्वर्ज्यमन्यो भर्ता मनस्यपि मे न भविष्यतीति। तत् कस्मान्मया सह न ब्रवीषि। अथ स अवदत्। प्राप्तव्यमर्थं लभते मनुष्यः। इत्युक्ते तयान्यो ऽयमिति मत्वा धवलगृहादुत्तार्य मुक्तः। स तु दण्डदेवकुले गत्वा प्रसुप्तः। अथ तत्र कयाचित

स्वैरिण्या दत्तसङ्केतको यावद्दण्डपाशकः प्राप्तः। तावदसौ पूर्वसुप्तस्तेन दृष्टः। रहस्यसंरक्षणार्थमभिहितश्च। को भवान्। सो ऽब्रवीत्। प्राप्तव्यमर्थं लभते मनुष्यः। इति श्रुत्वा दण्डपाशकेनाभिहितं। शून्यं देवगृहमिदं। मम गृहे गत्वा मदीयशयने स्वपिहि। तथा प्रतिपद्य समतिविपर्यासादन्यशयने सुप्तः। अथ तस्यारक्षकस्य वृहत्कन्यका विनयवती नाम रूपयौवनसम्पन्ना कस्यापि पुरुषस्यानुरक्ता तस्य सङ्केतकं दत्त्वा तत्र शयने सुप्तासीत्। अथ सा तमायान्तं दृष्ट्वा स एवायमस्मद्वल्लभ इति रात्रौ घनतरान्धकारव्यामोहितोत्थाय भोजनाच्छादनादिक्रियां कारयित्वा गान्धर्वविवाहेनात्मानं विवाहयित्वा। तेन समं शयने स्थिता विकसितवदनकमला तमाह। किमद्यापि मया सह विश्रब्धं भवान्न ब्रवीति। सो ऽब्रवीत्। प्राप्तव्यमर्थं लभते मनुष्य इति। तच्छ्रुत्वा तया चिन्तितं। यत् कार्यमसमीक्षितं क्रियते तस्येदृक् फलपाको भवति। एवं विमृश्य सविषादया तया निर्भर्त्स्य निःसारितो ऽसौ। स च यावद्वीथीमार्गेण गच्छति। तावदन्यविषयवासी वरकीर्तिर्नाम वरो महता वाद्यशब्देनागच्छति। प्राप्तव्यमर्थो ऽपि तैः सह गन्तुमारब्धः। अथ यावत् प्रत्यासन्ने लग्नसमये राजमार्गासन्नश्रेष्ठिगृहद्वारि रचितमण्डपवेदिकायां कृतकौतुकमङ्गलवेषा वणिक्कन्या तिष्ठति। तावन्मदमत्तो हस्त्यारोहकं हत्वा प्रणश्यज्जनकोलाहलेन लोकमाकुलयंस्तमेवोद्देशं सम्प्राप्तः। तं च दृष्ट्वा सर्वे वरानुयायिनो भयत्रस्तवरेण सह प्रणश्य दिशो दिशो जग्मुः। अथास्मिन्नवसरे भयतरललोचनामेकाकिनीं कन्यामवलोक्य मा भैषीरहं ते परित्रातेति स्वधीरतया तां स्थिरीकृत्य दक्षिणपाणौ सङ्गृह्य महासाहसिकतया प्राप्तव्यमर्थः परुषवाक्यैर्हस्तिनं निर्भर्त्सितवान्। ततः कथमपि दैवयोगादपयाते हस्तिनि ससुहृद्बान्धवो वरकीर्तिरतिक्रान्ते लग्नसमये समागच्छति। तावद्वधूरन्येन हस्ते गृहीता तिष्ठति। तद्दृष्ट्वा वरकी

र्तिनामभिहितं। भो श्वसुरक विरुद्धमिदं त्वयानुष्ठितं। यन्मह्यं प्रदाय कन्यान्यस्मै प्रदत्तेति। सो ऽब्रवीत्। भो अहमपि हस्तिभयपलायितो भवद्भिः सहायातो न जाने किमिदं वृत्तं। इत्यभिधाय दुहितरं प्रष्टुमारब्धः। वत्से न त्वया सुन्दरं कृतं। तत् कथ्यतां को ऽयं वृत्तान्तः। साब्रवीत्। यदहमनेन प्राणसंशयाद्रक्षिता। तदेनं मुक्त्वा मम जीवन्त्या नान्यः पाणिं ग्रहीष्यतीति। अनेन व्यतिकरेण रजनी व्युष्टा। अथ प्रातः सञ्जातमहाजनसमवाये तं वार्ताव्यतिकरं श्रुत्वा राजदुहिता तमुद्देशमागता। कर्णपरम्परया ज्ञात्वा दण्डपाशकसुतापि तत्रैवाजगाम। अथ तं महाजनसमवायं श्रुत्वा राजापि स्वयं तत्रायातः। प्राप्तव्यमर्थं प्राह। भो विश्रब्धं कथय कीदृशो ऽसौ वृत्तान्तः। सो ऽब्रवीत्। प्राप्तव्यमर्थं लभते मनुष्य इति। अथ राजकन्या स्मृत्वा प्राह। देवो ऽपि तं लङ्घयितुं न शक्तः। ततो दण्डपाशकसुता ब्रवीत्। तस्मान्न शोचामि। न विस्मयो म इति। तमखिललोकवृत्तान्तमाकर्ण्य वणिक्सुताब्रवीत्। यदस्मदीयं न हि तत् परेषामिति। अथ राजा तेषां सर्वेषामप्यभयप्रदानं दत्त्वा पृथक् पृथक् तं वृत्तान्तं ज्ञात्वावगततत्त्वस्तस्मै प्राप्तव्यमर्थाय स्वदुहितरं सबहुमानं ग्रामसहस्रेण समं सवलिं करणपरिवारयुतां दत्त्वा। त्वं मे पुत्रो ऽसीति। नगरविदितं तं युवराज्ये ऽभिषिक्तवान्। दण्डपाशकेनापि निजदुहिता शक्त्या वस्त्रदानादिना सम्भाव्य प्राप्तव्यमर्थाय प्रदत्ता। अथ प्राप्तव्यमर्थेनापि स्वीयपितृमातरौ समस्तकुटुम्बावृतौ तस्मिन्नगरे सम्मानपुरःसरं समानीतौ। सो ऽपि स्वगोत्रेण सह विविधभोगानुपभुञ्जानः सुखेनावस्थितः। अतो ऽहं ब्रवीमि।

प्राप्तव्यमर्थं लभते मनुष्यो देवो ऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत् परेषां॥

पुनरपि हिरण्यको ऽब्रवीत्। तदेतत् सकलं सुखदुःखमनुभूय परं

विषादमुपगतो ऽनेन सुहृदा त्वत्सकाशमानीतः। तदेतन्मे वैराग्यकारणां। मन्थरक आह। भद्र भवति सुहृदयमसन्दिग्धं यः क्षुत्क्षामो ऽपि शत्रुभूतं त्वां भक्ष्यस्थाने स्थितमप्येवं स्वपृष्ठमारोप्यात्रनीतवान्। न मार्गे ऽपि भक्षितवान्। उक्तं च।

विकारं याति नो चित्तं वित्ते यस्य कदाचन।
मित्रं स्यात् सर्वकाले च कारयेन्मित्रमुत्तमं ॥११८॥
विद्वद्भिः सुहृदामत्र चिह्नैरेतैर्विसंशयं।
परीक्षाकारणं प्रोक्तं होमाग्नेरिव भूतले ॥११९॥
आपत्काले तु सम्प्राप्ते यन्मित्रं मित्रमेव तत्।
वृद्धिकाले तु सम्प्राप्ते दुर्जनो ऽपि सुहृद्भवेत् ॥१२०॥

तन्मयाद्यास्य मित्रविषये विश्वासः समुत्पन्नः। यतो नीतिविरुद्धेयं मैत्री विहिता वायसेन सह सलिलस्थलचराणां। अथवा साध्विदमुच्यते।

न मित्रं कस्यचित् को ऽपि नितान्तं न च वैरकृत्।
दृश्यते मित्रविध्वस्तात् कार्याद्वैरी परीक्षितः ॥१२१॥

तत् स्वागतं भवतु ते। स्वगृहवदास्यतामत्र सरोपान्ते। यच्च वित्तनाशो विदेशवासश्च ते सञ्जातः। तदत्रविषये सन्तापो न कार्यः। उक्तं च।

अभ्रछाया खलप्रीतिः सिद्धमन्नं च योषितः।
किञ्चित् कालोपभोग्यानि यौवनानि धनानि च ॥१२२॥

अत एव विवेकिनो जितात्मानो धनस्पृहां न कुर्वन्ति। उक्तं च।

सुसञ्चितैर्जीवितवत् सुरक्षितैर्निजे ऽपि देहे न वियोजितैः क्वचित्।
पुंसो ऽवसानं व्रजतो ऽपि निष्ठुरैरेतैर्धनैः पञ्चपदी न मुच्यते ॥

अन्यच्च। यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥१२४॥

तथा च। निर्दोषमपि वित्ताढ्यं दोषैर्योजयते नृपः।
निर्धनः प्राप्तदोषो ऽपि सर्वत्र निरुपद्रवः ॥१२५॥

अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥१२६॥
अर्थार्थी याति कष्टानि मूढो ऽयं कुरुते जनः ।
शतांशेनापि मोक्षार्थी याति चेन्मोक्षमाप्नुयात् ॥१२७॥

अपरं विदेशवासे त्वया वैराग्यं न कार्यं । उक्तं च ।

को धीरस्य मनस्विनः स्वविषयः को वा विदेशः स्मृतो ।
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितं ।
यद्दंष्ट्रानखलाङ्गूलप्रहरणः सिंहो वनं गाहते ।
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥१२८॥

अर्थहीनो ऽपि परदेशगतो ऽपि यः प्रज्ञावान् भवति स कथञ्चिन्नैव सीदति । उक्तं च ।

विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥१२९॥

तत् प्रज्ञानिधिर्भवान् । न प्राकृतपुरुषतुल्यः । अथवा ।

उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तं ।
शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं मार्गति वासहेतोः ॥१३०॥

अपरं प्राप्तो ऽप्यर्थो ऽकर्मप्राप्त्या विनश्यति । तदेतावन्ति दिनानि त्वदीयं तदासीत् । मुहूर्तमप्यनात्मीयं भोक्तुं न लभ्यते । स्वयमागतमपि विधिनापह्रियते । उक्तं च यतः ।

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते ।
अरण्यं महदासाद्य मूढः सोमिलको यथा ॥१३१॥

कथा ॥५॥ हिरण्यक आह । कथमेतत् । मन्थरकः कथयति । अस्ति कस्मिंश्चिदधिष्ठाने सोमिलको नाम कौलिकः प्रतिवसति स्म । स चानेकविधपटरचनारञ्जितानि पार्थिवोचितानि वस्त्राणि सदैवोत्पादयति । परं भोजनाच्छादनाभ्यधिकं स्वल्पमप्यर्थमात्रं न सम्पद्यते । ये चान्ये

तत्र सामान्यतरकौलिकाः स्थूलवस्त्रसम्पादनपटवस्ते तु महर्द्धिसम्पन्नाः। अथ तानालोक्य सोमिलकः स्वभार्यामाह। प्रिये पश्यैतान् स्थूलपटकारकान् धनकनकसमृद्धान्। तदधारणकं ममैतत् स्थानं। अन्यत्रोपार्जनाय तस्माद्गच्छामः। सा प्राह। भो प्रियतम मिथ्या जल्पितमेतत्। यदन्यत्रगतानां धनं भवति स्वस्थाने न भवति। उक्तं च यतः।

उत्पतन्ति यदाकाशे निपतन्ति महीतले।
पक्षिणस्तदपि प्राप्त्या नादत्तमुपतिष्ठति ॥१३२॥

तथा च। न हि भवति यन्न भाव्यं भवति हि भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य तु भवितव्यता नास्ति ॥१३३॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरं।
यथा पुराकृतं कर्म कर्तारमनुविन्दति ॥१३४॥

अन्यच्च। शतसहस्रयानेन गच्छन्तमनुगच्छति।
नराणां प्राकृतं कर्म तद्वत् कर्म महात्मनः ॥१३५॥

पुनश्च। यथा छायातपौ नित्यं सुसम्बद्धौ परस्परं।
एवं कर्म च कर्ता च संश्लिष्टावितरेतरं ॥१३६॥

तस्मादत्रैव व्यवसायपरो भव। कौलिक आह। प्रिये न सम्यगभिहितं भवत्या। व्यवसायं विना कर्म न फलति। उक्तं च।

यथैकेन न हस्तेन तालिकः सम्प्रपद्यते।
तथोद्यमपरित्यक्तं न फलं कर्मणः स्मृतं ॥१३७॥

तथा च। पश्य कर्मवशात् प्राप्तं भोज्यकाले तु भोजनं।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथञ्चन ॥१३८॥

भूयश्च। उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
न हि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगाः ॥१३९॥

पुनश्च। स्वशक्त्या कुर्वतः कर्म न चेत् सिद्धिं प्रयच्छति।

नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः ॥१४०॥

तन्मयावश्यं देशान्तरं गन्तव्यमिति निश्चित्य वर्धमानपुरं गतः। तत्र च वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयो ऽपि स्वगृहं प्रति प्रस्थितः। अथार्धमार्गे महाटव्यां गच्छतो ऽस्य भगवानादित्यो ऽस्तमुपागतः। तदसौ व्यालभयात् स्थूलतरवटवृक्षस्कन्धमारुह्य यावत् प्रसुप्तः। तावन्निशीथे स्वप्ने द्वौ पुरुषौ रौद्राकारौ परस्परं प्रजल्पन्तावशृणोत्। तत्रैकः प्राह। भो कर्तस्त्वं सम्यग्वेत्सि यदस्य सोमिलकस्य भोजनाच्छादाभ्यधिका समृद्धिर्नास्ति। अतो भवता कदाचिदपि नाधेया। तत् किं त्वयास्य सुवर्णशतत्रयं प्रदत्तं। स आह। भो कर्मन् मयावश्यं व्यवसायिनां व्यवसायानुरूपं फलं देयं। तस्य च परिणतिस्त्वदायत्ता। इत्यतस्त्वमेवापहरेति। तच्छ्रुत्वा यावदसौ कौलिकः प्रबुद्धः सुवर्णग्रन्थिमवलोकयति तावद्रिक्तां पश्यति। ततः साक्षेपं चिन्तयामास। अहो किमेतत्। कष्टेनोपार्जितमपि वित्तं हेलया क्वापि गतं। तद्व्यर्थश्रमो मे न किञ्चन। कथं स्वपत्न्या मित्राणामग्रे च मुखं दर्शयिष्यामि। इति निश्चित्य तदेव पत्तनं गतः। तत्र च वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयो ऽपि स्वस्थानं प्रति प्रस्थितः। यावदर्धपथि प्राप्तस्तावद्भूयो ऽप्यटवीमध्यगतस्य भगवान् भानुरस्तं जगाम। अथ सुवर्णनाशभयात् सुश्रान्तो ऽपि न विश्राम्यति। केवलं कृतगृहोत्कण्ठः सत्वरं व्रजति। एतस्मिन्नन्तरे द्वौ पुरुषाकारौ तादृशावेव पृष्ठप्रदेशे समागच्छन्तौ परस्परं जल्पन्तौ चाशृणोत्। तत्रैकः प्राह। भो कर्तः किं त्वयैतस्य सोमिलकस्य सुवर्णशतपञ्चकं प्रदत्तं। तत् किं न वेत्सि यद्भोजनाच्छादनाभ्यधिका काचित् प्राप्तिर्नास्ति। सो ऽब्रवीत्। भो कर्मन्। मयावश्यं देयं व्यवसायिनां नृणां। तस्य परिणामस्त्वदायत्ता। तत् किं मामुपालम्भयसि। तच्छ्रुत्वा यावदसौ सोमिलको ग्रन्थिमन्वेष्यति। तावत् सुवर्णं नास्ति। ततः परं दुः

खमापन्नो हा हतो ऽस्मीति सोमिलकः परं वैराग्यं गतो व्यचिन्तयत्। अहो किं मम धनरहितस्य जीवितेन। तदत्र वटवृक्ष आत्मानमुद्दृत्य प्राणत्यागं करोमि। एवं निश्चित्य दर्भमयीं रज्जुं विधाय। स्वकण्ठे पाशं नियोज्य। शाखामासाद्य। तया सह यावदात्मकण्ठं निबध्यात्मानं निक्षिपति। तावदेकः पुमानाकाशस्थ इदमाह। भो भो सोमिलक मैवं साहसं कार्षीः। अहं तव वित्तापहारको न ते भोजनाच्छादनाभ्यधिकां वराटिकामपि सहामि। तद्गच्छ स्वगृहं प्रति। अन्यच्च भवदीयसाहसेनाहं तुष्टः। तत् प्रार्थ्यतामभीष्टो वरः कश्चिदिति। सोमिलक आह। यद्येवं तद्देहि मे प्रभूतं धनं। स आह। भो किं करिष्यसि धनेनोपभोगरहितेन। यतो भोजनाच्छादनाभ्यधिको नास्ति ते भोगः। उक्तं च।

किं तया क्रियते लक्ष्म्या या वधूरिव केवला।
या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥१४१॥

सोमिलक आह। भो यद्यपि तस्य धनस्य भोगो नास्ति तथापि तद्भवतु। उक्तं च यतः।

कृपणो ऽप्यकुलीनो ऽपि सज्जनैर्वर्जितः सदा।
सेव्यते स नरो लोकैर्यस्य स्याद्वित्तसञ्चयः ॥१४२॥

तथा च। शिथिलौ च सुबद्धौ च पततः पततो न वा।
निरीक्षितौ मया भद्रे वर्षाणि दश पञ्च च ॥१४३॥

पुरुष आह। कथमेतत्। सो ऽब्रवीत्। कस्मिंश्चिदधिष्ठाने तीक्ष्ण
वृषणो नाम महावृषभः प्रतिवसति स्म। स च मदातिरेकः परि ॥६॥
त्यक्तनिजयूथः शृङ्गाभ्यां नदीतटान् विदारयन् स्वेच्छया मरकतसदृशानि शष्पाग्राणि भक्षयन्नरण्यचरो बभूव। अथ तत्रैव वने प्रलोभको नाम शृगालः प्रतिवसति स्म। स कदाचित् स्वभार्यया सह नदीपुलिने सुखोपविष्टस्तिष्ठति। अत्रान्तरे स तीक्ष्णवृषणो जलपानार्थं

तदेव पुलिनमवतीर्णाः। ततश्च तस्य लम्बमानौ वृषणाववलोक्य शृगाल्या शृगालो ऽभिहितः। स्वामिन् पश्यास्य वृषभस्य मांसपिण्डौ लम्बमानौ यथा स्थितौ। तदेतौ क्षणेन प्रहरेण वा पतिष्यतः। एवं ज्ञात्वा भवानस्य पृष्ठे यातुमर्हति। शृगाल आह। प्रिये न ज्ञायते कदाचिदेव तयोः पतनं भविष्यति वा न वा। तत् किं मां वृथा श्रमाय नियोजयसि। अत्रस्थस्तावज्जलार्थमागतान् मूषकान् त्वत्समेतो भक्षयिष्यामि। मार्गो ऽयं यतस्तेषां। अपरं यदि त्वां मुक्त्वास्य वृषभस्य पृष्ठे गमिष्यामि। तदागत्यान्यः कश्चिदेतत् स्थानं समाश्रयिष्यति। तन्नैतद्युज्यते कर्तुं। उक्तं च।

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥१४४॥

शृगाल्याह। भो कापुरुषस्त्वं यत् किञ्चिदवाप्य तेनापि सन्तोषं करोषि। उक्तं च।

सुपूरा स्यात् कुनादीका सुपूरो मूषकाञ्जलिः।
सुसन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥१४५॥

तस्मात् सत्पुरुषेण सदैवोत्साहवता भाव्यं। उक्तं च।

यत्रोत्साहसमारम्भो यत्रालस्यविहीनता।
नयविक्रमसंयोगात् तत्र श्रीरखिला ध्रुवं ॥१४६॥

न दैवमिति सञ्चिन्त्य त्यजेदुद्योगमात्मनः।
अनुद्योगेन नो तैलं तिलेभ्यो ऽपि हि जायते ॥१४७॥

अन्यच्च। स्तोकेनापि यदि स्यात् सन्तोषपरो ऽत्र मानवो मन्दः।
तस्य गणनासु चित्तं दत्त्वा रेखापि मार्जयति ॥१४८॥

यच्च त्वं वदसि। एतौ पतिष्यतो वा न वेति। तदप्ययुक्तं। उक्तं च।

कृतनिश्चयिनो वन्द्यास्तुङ्गिमानः प्रशस्यते।
चातकः को वराको ऽयं यस्येन्द्रो वारिवाहकः ॥१४९॥

अपरं तावदहं मूषकमांसस्यातीव निर्विण्णा। एतौ च मांसपिण्डौ प्रत्यासन्नपतनौ दृश्येते। तत् सर्वथा नान्यथा कर्तव्यमिति। अथासौ तदाकर्ण्य मूषकप्राप्तिस्थानं परित्यज्य तीक्ष्णवृषणस्य पृष्ठमन्वगच्छत्। अथवा साध्विदमुच्यते।

तावत् स्यात् सर्वकृत्येषु पुरुषो ऽत्र स्वयं प्रभुः।
स्त्रीवाक्याङ्कुशप्रक्षुण्णो यावन्नो ध्रियते बलात् ॥१५०॥

तथा च। अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगं।
अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥१५१॥

एवं स तस्य पृष्ठतः सभार्यः परिभ्रमन् चिरकालमनयत्। न च तयोः पतनमभूत्। ततश्च निर्वेदात् पञ्चदशे वर्षे शृगालः स्वभार्यामाह।

शिथिलौ च सुबद्धौ च पततः पततो न वा।
निरीक्षितौ मया भद्रे वर्षाणि दश पञ्च च ॥१५२॥

तत् पश्चादपि न तयोः पतनं भविष्यति। तमेव मूषकमार्गमनुसरावः। अतो ऽहं ब्रवीमि।

शिथिलौ च सुबद्धौ च पततः पततो न वा।
निरीक्षितौ मया भद्रे वर्षाणि दश पञ्च च ॥१५३॥

तदेवं धनवान् सर्वो ऽपि स्पृहणीयो भवति। अतो देहि मे प्रभूतं धनं। पुरुष आह। यद्येवं तद्गच्छ त्वं भूयो ऽपि वर्द्धमानपुरं। तत्र द्वौ वणिक्पुत्रौ वसतः। एको धनगुप्तः। अन्य उपभुक्तधनः। ततस्तयोः स्वरूपं बुद्ध्वा। एकस्य वरः प्रार्थनीयः। यदि ते गुप्तधनेन प्रयोजनमभक्षितेन। ततस्त्वामपि गुप्तधनं करोमि। अथवा दत्तभोग्येन धनेन ते प्रयोजनं। तदुपभुक्तधनं करोमि। इत्येवमुक्त्वादर्शनं जगाम। सोमिलको ऽपि विस्मितमना भूयो ऽपि वर्धमानपुरं गतः। अथ सन्ध्यासमये परिश्रान्तः कथमपि तत् पुरं प्राप्तो धनगुप्तगृहं पृच्छन् कृच्छ्रेण लब्धास्तमिते सूर्ये प्रविष्टः। अथासौ भार्यापुत्रसहितेन धन

गुप्तेन निर्भर्त्स्यमानो हठादेव गृहाजिरं प्राप्योपविष्टः। ततश्च भोजनवेलायां तस्यापि भुक्तिवर्जितमपि भोजनं प्रदत्तं। ततः स भुक्त्वा तत्रैव यावत् सुप्तो निशीथे पश्यति। तावत् तावपि पुरुषौ परस्परं मन्त्रयतः। तत्रैकः प्राह। भो कर्तः किं त्वयास्य धनगुप्तस्याधिको व्ययो निर्मितः। यत् सोमिलकस्याप्यनेन भोजनं दत्तं। तदयुक्तं त्वयानुष्ठितं। स आह। भो कर्म न ममात्र दोषः। मया हि लाभप्राप्तिर्दातव्या व्यवसायिनः। तत्परिणतिः पुनस्त्वदायत्तेति। अथासौ यावदुत्तिष्ठति तावद्धनगुप्तो विसूचिकादोषेण खिद्यमानो रोगाभिभूतः क्षणं तिष्ठति। ततो द्वितीये ऽह्नि तद्दोषेण कृतोपवासः सञ्जातः। सोमिलको ऽपि प्रभाते तद्गृहान्निष्क्रम्योपभुक्तधनगृहे गतः। तेनापि चाभ्युत्थानादिभिः सत्कृतो विहितभोजनाच्छादनसम्मानस्तस्यैव गृहे भव्यशय्यायामारूढः सुष्वाप। ततश्च निशीथे यावत् पश्यति। तावत् तावेव द्वौ पुरुषौ मिथो मन्त्रयेते। तत्रैको ऽब्रवीत्। भो कर्तरनेनोपभुक्तधनेन सोमिलकस्योपचारं कुर्वता प्रभूतो व्ययः कृतः। तत् कथमस्योद्धारणविधिर्भविष्यति। यतः सर्वमेतदनेन व्यवहारकगृहात् समानीतमस्ति। स आह। भो कर्म मम कृत्यमेतत्। परिणतिश्च त्वदायत्तेति। अथ प्रभाते को ऽपि राजपुरुषो राजप्रसादजं वाङ्वित्तमादाय समायात उपभुक्तधनाय सर्वं समर्पयामास। तद्दृष्ट्वा सोमिलकश्चिन्तयामास। अहो सञ्चयविरहितो ऽपि वरमेष उपभुक्तधनो न पुनरसौ कदर्यो धनगुप्तः। उक्तं च यतः।

अग्निहोत्रफला वेदाः शीलवृत्तिफलं श्रुतं।
रतिपुत्रफला दारा दत्तभुक्तफलं धनं ॥१५४॥

तद्भगवान् विधाता मां दत्तभुक्तधनं करोतु। न कार्यं मे धनगुप्ततया। तच्छ्रुत्वा तं तादृशं कृत्वा कर्मकर्तारौ जग्मतुरदर्शनीयं। अतो ऽहं ब्रवीमि।

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते ।
अरण्यं महदासाद्य मूढः सोमिलको यथा ॥ १५५ ॥

तद्भद्र हिरण्यकैवं ज्ञात्वा धनविषये त्वया सन्तापो न कार्यः । यतो विद्यमानमप्यभोज्यं धनमविद्यमानमेव मन्तव्यं । उक्तं च ।

गृहमध्यनिखातेन धनेन धनिनो यदि ।
भवामः किं न तेनैव विधने धनिनो वयं ॥ १५६ ॥

तथा च । उपार्जितानामर्थानां त्याग एव हि कारणं ।
तडागोदरसंस्थानां परीवाह इवाम्भसां ॥ १५७ ॥

अन्यच्च । दातव्यं भोक्तव्यं धनविषये सञ्चयो न कर्तव्यः ।
पश्येह मधुकरीणां सञ्चितमर्थं हरन्त्यन्ये ॥ १५८ ॥

तथा च । दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १५९ ॥

एवं ज्ञात्वा विवेकिना न सुखार्थं वित्तोपार्जनं कर्तव्यं । यतो दुःखाय तत् । उक्तं च ।

धनादिकेषु विद्यन्ते ये ऽत्र मूर्खाः सुखाशयाः ।
तप्तग्रीष्मेण सेवन्ते शैत्यार्थं ते हुताशनं ॥ १६० ॥

तस्मात् सदैव सत्पुरुषेण सन्तोषः कार्यः । उक्तं च ।

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते ।
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं ।
सन्तोष एव पुरुषस्य परं निधानं ॥ १६१ ॥

सन्तोषमृततृप्तानां यत् सुखं शान्तचेतसां ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावतां ॥ १६२ ॥

पीयूषमिव सन्तोषं पिबतां निर्वृतिः परा ।
दुःखं निरन्तरं पुंसामसन्तोषवतां पुनः ॥ १६३ ॥

निरुद्धचेतसो ऽक्षाणि निरुद्धान्यखिलान्यपि ।
आच्छादिते रवौ मेघैराच्छन्नाः स्युर्गभस्तयः ॥१६४॥
वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः ।
वाञ्छा निवर्तते नार्थैः पिपासेवाग्निसेचनैः ॥१६५॥
अनिन्द्यमपि निन्दन्ति स्तुवन्त्यस्तुत्यमुच्चकैः ।
स्वापतेयकृते मर्त्याः किं किं नाम न कुर्वते ॥१६६॥
धर्मार्थं यस्य वित्तेहा तस्यापि न शुभावहा ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरं ॥१६७॥
दानेन तुल्यो निधिरस्ति नान्यो लोभान्न चान्यो ऽस्ति रिपुः पृथिव्यां ।
विभूषणं शीलसमं न चान्यत् सन्तोषतुल्यं धनमस्ति नान्यत् ॥१६८॥
दारिद्रस्य परा मूर्तिर्या ज्ञानद्रविणाल्पता ।
जरद्गवधनः शर्वस्तथापि परमेश्वरः ॥१६९॥

तत् किमुद्विग्नमात्मानं मन्यसे ।

सकृत् कन्दुकपातेन पतत्यार्यः पतन्नपि ।
तथा पतति मूर्खस्तु मृत्पिण्डपतनं यथा ॥१७०॥

एवं ज्ञात्वा भद्र त्वया सन्तोषः कार्य इति । मन्थरकवचनमाकर्ण्य वायस आह । भद्र मन्थरको यदेवं वदति तत् त्वया चित्ते कर्तव्यं । अथवा साध्विदमुच्यते ।

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य हि पथ्यस्य वक्ता श्रोता च दुर्लभाः ॥१७१॥
अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह ।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नाम धारकाः ॥१७२॥

अथैवं प्रजल्पतां तेषां चित्राङ्गो नाम हरिणो लुब्धकत्रासितस्तस्मिन् सरसि प्रविष्टः । अथ तमायान्तं ससम्भ्रममवलोक्य लघुपतनको वृक्षमारूढः । हिरण्यको निकटवर्तिनं शरस्तम्बं । मन्थरकः सलिल आ

शयमास्थितः। अथ लघुपतनको मृगं सम्यक् परिज्ञाय मन्थरकमुवाच। एह्येहि सखे मन्थरक मृगो ऽयं तृषार्तो ऽत्र समागतः सरसि प्रविष्टः। तस्य शब्दो ऽयं न मानुषसम्भवः। तच्छ्रुत्वा मन्थरको देशकालोचितमिदमाह। भो लघुपतनक यथायं मृगो दृश्यते प्रभूतमुद्वहन्नुद्भ्रान्तदृष्टिः। पृष्ठमवलोकयति। तन्न तृषार्त एष। नूनं लुब्धकत्रासितः। ततो ज्ञायतामस्य पृष्ठे लुब्धका आगच्छन्ति न वेति। उक्तं च।

भयत्रस्तो नरः श्वासं प्रभूतं कुरुते मुहुः।
दिशो विलोकयत्येव न स्वास्थ्यं व्रजति क्वचित् ॥१७३॥

तच्छ्रुत्वा चित्राङ्गः प्राह। भो मन्थरक ज्ञातं त्वया सम्यक् मे त्रासकारणं। अहं लुब्धकशरप्रहारादुद्धरितः कृच्छ्रेणात्र समायातः। मम यूथं पुनस्तैर्लुब्धकैर्व्यापादितं भविष्यति। तच्छरणागतस्य मम किञ्चिद्दर्शयागम्यं स्थानं दुष्टलुब्धकानां। तदाकर्ण्य मन्थरक आह। भो चित्राङ्ग श्रूयतां नीतिशास्त्रं। उक्तं च।

द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने।
हस्तयोश्चलनादेको द्वितीयः पादवेगजः ॥१७४॥

तद्गम्यतां शीघ्रं सघनं वनं। यावदद्यापि नागच्छन्ति ते दुरात्मानो लुब्धकाः। अत्रान्तरे लघुपतनकः सत्वरमभ्युपेत्य प्रोवाच। भो मन्थरक गतास्ते लुब्धका स्वगृहोन्मुखाः प्रचुरमृगमांसपिण्डधारिणः। तच्चित्राङ्ग विश्रब्धो जलाद्बहिर्भव। ततस्ते चत्वारो ऽपि मित्रभावमाश्रित्य तस्मिन् सरसि मध्याह्नवेलायां वृक्षच्छायाधस्तात् सुभाषितकथागोष्ठीमनुभवन्तः सुखेन कालं नयन्ति स्म। अथवा युक्तमेतदुच्यते।

सुभाषितरसास्वादजातरोमाञ्चकञ्चुकाः।
विनापि कामिनीसङ्गं सुधियः सुखमाप्नुयुः ॥१७५॥
सुभाषितमयैर्द्रव्यैः सङ्ग्रहं न करोति यः।
स तु प्रस्तावयज्ञेषु किं प्रदास्यति दक्षिणां ॥१७६॥

तथा च। सकृदुक्तं न गृह्णाति स्वयं वा न करोति यः।
यस्य सम्पुटिका नास्ति कुतस्तस्य सुभाषितं ॥१७७॥

अथैकस्मिन्नहनि गोष्ठीसमये चित्राङ्गो नायातः। अथ ते त्रयो व्याकुलीभूताः परस्परं जल्पितुमारब्धाः। अहो किमद्य सुहृन्न समायातः। किं सिंहादिभिः क्वापि व्यापादितः। उतहोस्विल्लुब्धकैः। अथवा दावानले प्रपतितः। गर्ताविषमे वा नवतृणलौल्यादिति। अथवा साधिदमुच्यते।

स्वगृहोद्यानगते ऽपि हि स्निग्धे पापं विशङ्क्यते स्नेहात्।
किमु दृष्टबहुपायप्रतिभयकान्तारमध्यस्थे ॥१७८॥

अथ मन्थरको वायसमाह। भो लघुपतनक अहं हिरण्यश्च तावद्द्वावप्यशक्तौ तस्यान्वेषणं कर्तुं मन्दगतित्वात्। तद्गत्वारण्यं शोधय यदि कुत्रचितं तं जीवन्तं पश्यसीति। तदाकर्ण्य लघुपतनको नातिदूरं यावत् सरसो गच्छति। तावत् पल्वलतीरे चित्राङ्गः कूटपाशनियन्त्रितस्तिष्ठति। तं दृष्ट्वा शोकव्याकुलितमनास्तमवोचत्। भद्र किमिदं। चित्राङ्गो ऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव। अथवा युक्तमेतत्। उक्तं च यतः।

अपि मन्दत्वमापन्नो नष्टो वाभीष्टदर्शनात्।
प्रायेण प्राणिनां भूयो दुःखवेगो ऽधिको भवेत् ॥१७९॥

ततश्च बाष्पावसाने लघुपतनकमाह। भो मित्र सञ्जातो ऽयं तावन्मम मृत्युः। तदपि युक्तं सम्पन्नं यद्भवता सह मे दर्शनमभूत्। उक्तं च।

प्राणत्यागे समुत्पन्ने यदा स्यान्मित्रदर्शनं।
तद्द्वाभ्यां सुखदं पश्चाज्जीवतो ऽपि मृतस्य च ॥१८०॥

तत् क्षन्तव्यं त्वया यत्किञ्चिन्मया प्रणयकुपितेन सुभाषितगोष्ठीष्वभिहितं। तथा च हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ। उक्तं च।

अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतं।

तत् क्षन्तव्यं युवाभ्यां मे कृत्वा प्रीतिपरं मनः ॥१८१॥

तच्छ्रुत्वा लघुपतनक आह । भद्र न भेतव्यमस्मद्विधैर्मित्रैर्विद्यमानैः । तदहं हिरण्यकं गृहीत्वा द्रुततरमागच्छामि । अपरं ये सत्पुरुषा भवन्ति ते व्यसने न व्याकुलतामुपयान्ति । एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान् । हिरण्यकं च चित्राङ्गपाशमोक्षणकृतनिश्चयं पृष्ठमारोप्य पुनश्चित्राङ्गान्तिकमागतः । सो ऽपि मूषकमवलोक्य किंचिज्जीविताशया संश्लिष्टः सविषादमाह । भो मित्र साध्विदमुच्यते ।

आपन्नाशाय विबुधैः कर्तव्याः सुहृदो ऽमलाः ।
न तरत्यापदं कश्चिद्यो ऽत्र मित्रविवर्जितः ॥१८२॥

हिरण्यक आह । भद्र तावत् त्वं नीतिशास्त्रज्ञो दक्षमतिः । तत् कथमत्र कूटे पतितः । चित्राङ्ग आह । भो न कालो ऽयं विवादस्य । तद्यावत् स पापात्मा लुब्धको न समभ्येति । तावद्द्रुततरं कर्तयेमं मत्पादपाशं । तदाकर्ण्य हि विहस्य हिरण्यक आह । भद्र किं मय्यपि समायाते लुब्धकाद्बिभेषि । ततः शास्त्रं प्रति मे महती विरक्तिः संजाता । यद्भवद्विधा अपि नीतिशास्त्रविद एतामवस्थां प्राप्नुवन्ति । तेन त्वां पृच्छामि । स आह । भद्र कर्मणा बुद्धिरपि हन्यते । उक्तं च यतः ।

विधात्रा रचिता रेखा ललाटे ऽक्षरमालिका ।
न तां मार्जयितुं शक्ताः स्वबुद्ध्याप्यतिपण्डितः ॥१८३॥

एवं तयोः प्रवदतोः सुहृद्व्यसनसंतप्तहृदयो मन्थरकस्तं प्रदेशं शनैः शनैराजगाम । अथ तमायान्तमवलोक्य लघुपतनक आह । अहो न शोभनमापतितं । हिरण्यक आह । किं स लुब्धकः समायाति । वायस आह । आस्तां तावल्लुब्धकवार्ता । एष मन्थरकः समायाति । तदनीतिरनुष्ठितानेन । वयमपि नूनं व्यापादनीयतां यास्यामो ऽस्य

कारणात्। यतो यदि स पापात्मा लुब्धकः समागमिष्यति। तदहं तावत् खमुत्पतिष्यामि। त्वं पुनर्बिलं प्रविश्यात्मानं रक्षिष्यसि। चित्राङ्गो ऽपि वेगेन वनान्तरं यास्यति। एष पुनर्जलचरो ऽत्र स्थले किं करिष्यति। इति व्याकुलो ऽस्मि। अत्रान्तरे सम्प्राप्तो मन्थरकः। हिरण्यकः प्राह। भद्र न युक्तमनुष्ठितं भवता यदत्रायातस्त्वं। तद्भूयो ऽपि द्रुततरं गम्यतामिति यावदसौ लुब्धको न समायाति। मन्थरक आह। भद्र किं करोमि। न शक्नोमि तत्रस्थो मित्रव्यसनहुताशनदाहं सोढुं। तेनाहमत्रागतः। अथवा साध्विदमुच्यते।

दयितजनविप्रयोगो वित्तवियोगश्च केन सह्याः स्युः।
यदि सुमहौषधकल्पो वयस्यजनसङ्गमो न स्यात् ॥१८४॥

अपि च। वरं प्राणपरित्यागो न वियोगो भवदृशैः।
प्राणा जन्मान्तरे भूयो न भवन्ति भवद्विधाः ॥१८५॥

एवं तस्य प्रवदतः शरासनपाणिर्लुब्धको ऽप्युपागतः। तं दृष्ट्वा मूषकेण तत्क्षणात् तस्य स्नायुमयः पाशः खण्डितः। एतस्मिन्नन्तरे चित्राङ्गः सत्वरं प्रधावितुमारब्धः। लघुपतनको वृक्षं समारूढः। हिरण्यकः समीपवर्तिनं बिलं प्रविष्टः। अथासौ लुब्धको मृगगमनाद्विषण्णमना व्यर्थश्रमस्तं मन्थरकं मन्दं मन्दं स्थलमध्ये गच्छन्तं दृष्टवान् व्यचिन्तयत्। स यद्यपि कुरङ्गो मे धात्रापहृतः। तथाप्ययं कूर्म आहारार्थं सम्पादितः। तदद्यास्यामिषेण कुटुम्बस्याहारनिर्वृत्तिर्भविष्यति। उक्तं च यतः।

उत्पततो ऽन्तरीक्षं वै गच्छतो ऽपि महीतलं।
धावतः पृथिवीं सर्वां नादत्तमुपतिष्ठति ॥१८६॥

एवं विचिन्त्य तं दर्भैः परिच्छाद्य धनुषि समालम्ब्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः। अत्रान्तरे तं नीयमानमवलोक्य हिरण्यको दुःखाकुलः पर्यदेवयत्। कष्टं भो कष्टं।

एकस्य कष्टस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥१८७॥
यावदस्खलितं तावत् सुखं याति समे पथि ।
स्खलिते च समुत्पन्ने विषमं च पदे पदे ॥ १८८ ॥

किं च । यन्नम्रं सरलं चापि तच्चापत्सु न सीदति ।
धनुर्मित्रं कलत्रं च दुर्लभं शुद्धवंशजं ॥ १८९ ॥
न मातरि न दारेषु न सोदर्ये न चात्मजे ।
विश्रम्भस्तादृशः पुंसां यादृग्मित्रे निरन्तरे ॥१९०॥

यदि तावत् कृतान्तेनात्र धननाशो मे कृतः । मम मार्गश्रान्तस्य विश्रामस्तत् कथं मित्रो ऽप्यपहृतः । अपरमपि मित्रं भविष्यति । परं मन्थरकसमं न स्यात् । उक्तं च यतः ।

असुखैश्च विनालापो गुह्यस्य कथनं तथा ।
विपद्विमोक्षणं चैव मित्रतायाः फलत्रयं ॥ १९१ ॥

तदस्य पश्चान्नान्यत् सुहृन्मे । तत् किं ममोपर्यनवरतं व्यसनशरैर्वर्षति विधाता । कथमादौ तावद्वित्तविनाशः । ततः परिवारभ्रंशः । ततो देशत्यागः । ततो मित्रवियोग इति । अथवा स्वरूपमेवैतत् सर्वेषामपि जन्तूनां जीवितधर्मस्य । उक्तं च यतः ।

कायः सन्निहितापायः सम्पदः क्षणभङ्गुराः ।
समागमाः सापगमाः सर्वेषामेव देहिनां ॥ १९२ ॥

तथा च । क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये दीव्यति जाठराग्निः ।
आपत्सु वैराणि समुल्लसन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥१९३॥

अहो साधूक्तं केनापि ।

प्राप्ते भये परित्राणं प्रीतिविश्रम्भभाजनं ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयं ॥ १९४ ॥

एतस्मिन्नन्तरे आक्रन्दनपरौ चित्राङ्गलघुपतनकौ तत्रैव समागतौ ।

अथ हिरण्यक आह । अहो किं वृथाप्रलपितेन । तद्यावदेष मन्थरको दृष्टिगोचरान्न नीयते । तावदस्य मोक्षस्योपायश्चिन्त्यतामिति । उक्तं च यतः ।

व्यसनं प्राप्य यो मोहात् केवलं परिदेवयेत् ।
व्यसनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥१९५॥
केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः ।
तस्योच्छेदसमारम्भो विषादपरिवर्जनं ॥१९६॥

अन्यच्च ।

अतीतलाभस्य सुरक्षणार्थं भविष्यलाभस्य च सङ्गमार्थं ।
आपत्प्रपन्नस्य च मोक्षणार्थं यन्मन्त्र्यते ऽसौ परमो हि मन्त्रः ॥१९७॥

तच्छ्रुत्वा वायस आह । भो यद्येवं तत् क्रियतां मद्वचः । एष चित्राङ्गो ऽस्य मार्गे गत्वा किञ्चित् पल्वलमासाद्य तस्य तीरे निश्चेतनो भूत्वा पततु । अहमप्यस्य शिरसि समारुह्य मन्दैश्चञ्चुप्रहारैः शिर उल्लिखयिष्यामि । येनासौ दुष्टलुब्धको ऽमुं मृतं मत्वा मम चञ्चुप्रहरणप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थं परिधाविष्यति । अत्रान्तरे त्वया दर्भमयानि पाशानि खण्डनीयानि । येनासौ मन्थरको द्रुततरं पल्वलं प्रविशति । चित्राङ्ग आह । भो भद्रो ऽयं त्वया दृष्टो मन्त्रः । नूनं मन्थरको ऽयं मुक्तो मन्तव्य इति । उक्तं च ।

सिद्धं वा यदि वासिद्धं चित्तोत्साहो निवेदयेत् ।
प्रथमं सर्वजन्तूनां तत् प्राज्ञो वेत्ति नेतरः ॥१९८॥

तदेवं क्रियतामिति । तथानुष्ठिते न लुब्धकस्तथैव मार्गासन्नपल्वलतीरस्थं चित्राङ्गं वायससनाथमपश्यत् । तं दृष्ट्वा हर्षितमना व्यचिन्तयत् । नूनं पाशबन्धनवेदनया वराको ऽयं मृगः सावशेषजीवितः पाशं त्रोटयित्वा कथमप्येतद्वनान्तरं यावत् प्रविष्टस्तावन्मृतः । तद्वश्यो ऽयं मे कच्छपः सुयन्त्रितत्वात् । तदेनमपि तावद्गृह्णामीति । इत्यवधार्य

कच्छपं भूतले प्रक्षिप्य मृगमुपाद्रवत्। एतस्मिन्नन्तरे हिरण्यकेन वज्रोपमदंष्ट्राप्रहरणेन तद्दर्भवेष्टनं खण्डशः कृतं। मन्थरको ऽपि तृणामध्यान्निष्क्रम्य समीपवर्तिनं पल्वलं प्रविष्टः। चित्राङ्गो ऽप्यप्राप्तस्यापि तस्य तल उत्थाय वायसेन सह पलायितः। एतस्मिन्नन्तरे विलक्षो विषादपरो लुब्धको निवृत्तो यावत् पश्यति। तावत् कच्छपो ऽपि गतः। ततश्च तत्रोपविश्येमं श्लोकमपठत्।

प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत् त्वया मे हृतः।
सम्प्राप्तः कमठः स चापि नियतं नष्टस्त्वादेशतः॥१९९॥
क्षुत्क्षामो ऽत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्यया।
यच्चान्यन्न कृतं कृतान्त कुरुते तच्चापि सह्या वयं॥२००॥

एवं बहुविधं विलप्य स्वगृहं गतः। अथ तस्मिन् व्याधे दूरतरं गते सर्वे ऽपि ते काककूर्ममृगमूषकाः परमानन्दभाजः परस्परमालिङ्ग्य पुनर्जातमिवात्मानं मन्यमानास्तदेव सरः सम्प्राप्य महासुखेन सुभाषितकथागोष्ठीविनोदेन कालं नयन्ति स्म। एवं ज्ञात्वा विवेकिना मित्रसङ्ग्रहः कार्यः। न च मित्रेण सह व्याजेन वर्तितव्यमिति। उक्तं च यतः।

यो मित्राणि करोत्यत्र न कौटिल्येन वर्तते।
तैः समं न पराभूतिं सम्प्राप्नोति कथञ्चन॥२०१॥

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके मित्रसम्प्राप्तिर्नाम द्वितीयं तन्त्रं समाप्तं

अथेदमारभ्यते काकोलूकीयं नाम तृतीयं तन्त्रं। तस्यायमाद्यः श्लोकः।

न विश्वसेत् पूर्वविरोधितस्य शत्रोश्च मित्रत्वमुपागतस्य।
दग्धां गुहां पश्य उलूकपूर्णां काकप्रणीतेन हुताशनेन ॥ १ ॥

तद्यथानुश्रूयते। अस्ति दाक्षिणात्ये जनपदे मिहिलारोप्यं नाम नगरं। तस्य समीपस्थो ऽनेकशाखासनाथो ऽतिघनतरपत्रच्छन्नो न्यग्रोधपादपो ऽस्ति। तत्र च मेघवर्णो नाम वायसराजो ऽनेककाकपरिवारः प्रतिवसति स्म। स तत्र विहितदुर्गरचनः सपरिजनः कालं नयति स्म। तथान्यो ऽरिमर्दनो नामोलूकराजो ऽसङ्ख्योलूकपरिवारो गिरिगुहादुर्गाश्रयः प्रतिवसति स्म। स च रात्रावभ्येत्य सदैव तस्य न्यग्रोधस्य समन्तात् परिभ्रमति। अथोलूकराजः पूर्वविरोधवशाद्यं कञ्चिद्वायसं समासादयति। तं व्यापाद्य गच्छति। एवं नित्याभिगमनाच्छनैः शनैस्तन्न्यग्रोधपादपदुर्गं तेन समन्तान्निर्वायसं कृतं। अथवा भवत्येवं। उक्तं च यतः।

य उपेक्षेत शत्रुं स्वं प्रसरन्तं यदृच्छया।
रोगं चालस्यसंयुक्तः स शनैस्तेन हन्यते ॥ २ ॥

तथा च। जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत्।
अतिपुष्टाङ्गयुक्तो ऽपि स पश्चात् तेन हन्यते ॥ ३ ॥

अथान्येद्युः स वायसराजा सर्वान् वायससचिवानाहूय प्रोवाच। भो उत्कटस्तावदस्माकं शत्रुरुद्यमसम्पन्नश्च कालवन्नित्यमेव निशागमे समेत्यास्मत्पक्षकदनं करोति। तत् कथमस्य प्रतिविधानं। वयं तावद्रात्रौ

न पश्यामः। न च तस्य दिवादुर्गं विजानीमः। येन गत्वा प्रहरामः। तदत्रविषये किं युज्यते सन्धिविग्रहयानासनसंश्रयद्वैधीभावानामेकतमस्य क्रियमाणस्य। तद्विचार्य शीघ्रं कथयन्तु भवन्तः। अथ ते प्रोचुः। युक्त मभिहितं देवेन यदेष प्रश्नः कृतः। उक्तं च।

अपृष्टेनापि वक्तव्यं सचिवेनात्र किञ्चन।
पृष्टेन तु ऋतं पथ्यं वाच्यं च प्रियमप्रियं ॥४॥
यो न पृष्टो हितं ब्रूते परिणामे सुखावहं।
सुमन्त्री प्रियवक्ता च केवलं स रिपुः स्मृतः ॥५॥
तस्मादेकान्तमासाद्य कार्यो मन्त्रो महीपते।
येन तस्य वयं कुर्मो निर्णयं कारणं तथा ॥६॥

अथ स मेघवर्णो ऽन्वयागतानुजीविसञ्जीव्यनुजीविप्रजीविप्रजीविचिरजीविनाम्नः पञ्चसचिवान् प्रत्येकं प्रष्टुमारब्धः। तदेतेषामादौ तावदुज्जीविनं पृष्टवान्। भद्र एवं स्थिते किं मन्यते भवान्। स आह। राजन् बलवता सह विग्रहो न कार्यः। यथा स बलवान् कालप्रहर्त्ता च। उक्तं च यतः।

बलीयसे प्रणमतां काले प्रहरतामपि।
सम्पदो नापगच्छन्ति प्रतीपमिव निम्नगाः ॥७॥

तथा च। सत्याढ्यो धार्मिकश्चार्यो भ्रातृसङ्घातवान् बली।
अनेकविजयी चैव सन्धेयः स रिपुर्भवेत् ॥८॥
सन्धिः कार्यो ऽप्यनार्येण विज्ञाय प्राणसंशयं।
प्राणैः संरक्षितैः सर्वं यतो भवति रक्षितं ॥९॥

येनानेकयुद्धविजयी स तेन विशेषात् सन्धनीयः। उक्तं च।

अनेकयुद्धविजयी सन्धानं यस्य गच्छति।
तत्प्रभावेन तस्याशु वशं गच्छन्त्यरातयः ॥१०॥
सन्धिमिच्छेत् समेनापि सन्दिग्धो विजयो युधि।

न हि सांशयिकं कुर्यादित्युवाच बृहस्पतिः ॥११॥
सन्दिग्धो विजयो युद्धे जनानामिह युध्यतां ।
उपायत्रितयादूर्ध्वं तस्माद्युद्धं समाचरेत् ॥१२॥
असन्दधानो मानाढ्यः समेनापि हतो भृशं ।
आमकुम्भ इवान्येन करोत्युभयसङ्क्षयं ॥१३॥
समं शक्तिमता युद्धमशक्तस्य हि मृत्यवे ।
दृषत् कुम्भमिव भित्त्वा तावत् तिष्ठति शक्तिमान् ॥१४॥
अन्यच्च । भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयं ।
नास्त्येकमपि यद्येषां विग्रहं न समाचरेत् ॥१५॥
खनन्नाखुबिलं सिंहः पाषाणसकलाकुलं ।
प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥१६॥
तस्मान्न स्यात् फलं यत्र पुष्टं युद्धं तु केवलं ।
न तत् स्वयं समुत्पाद्यं कर्तव्यं न कथञ्चन ॥१७॥
बलीयसा समाक्रान्तो वैतसीं वृत्तिमाचरेत् ।
वाञ्छन् न भ्रंसिनीं लक्ष्मीं न भौजङ्गीं कदाचन ॥१८॥
कुर्वन् हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियं ।
भुजङ्गवृत्तिमापन्नो वधमर्हति केवलं ॥१९॥
कौर्मं सङ्कोचमास्थाय प्रहारानपि मर्षयेत् ।
काले काले च मतिमानुत्तिष्ठेत् कृष्णसर्पवत् ॥२०॥
आगतं विग्रहं गत्वा सुसाम्ना प्रशमं नयेत् ।
विजयस्य ह्यनित्यत्वाद्रभसाच्च समुत्पतेत् ॥२१॥
तथा च । बलिना सह योद्धव्यमिति नास्ति निदर्शनं ।
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥२२॥

एवमुज्जीवी साममन्त्रं सन्धिकारं ज्ञापितवान् । अथ तच्छ्रुत्वा सञ्जीविनमाह । भद्र तवाभिप्रायमपि श्रोतुमिच्छामि । स आह । देव न

ममैतत् प्रतिभाति यच्छत्रुणा सह सन्धिः क्रियते। उक्तं च यतः।

शत्रुणा न हि सन्दध्यात् सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकं ॥२३॥

अपरं च स क्रूरो ऽत्यन्तलुब्धो धर्मरहितः। तत् त्वया विशेषान्न सन्धेयः। उक्तं च यतः।

सत्यधर्मविहीनेन न सन्दध्यात् कथञ्चन।
सुसन्धितो ऽप्यसाधुत्वादचिराद्याति विक्रियां ॥२४॥

तस्मात् तेन सह योद्धव्यमिति मे मतिः। उक्तं च यत।

क्रूरो लुब्धो ऽलसो ऽसत्यः प्रमादी भीरुरस्थिरः।
मूढो युद्धावमन्ता च सुखोच्छेद्यो भवेद्रिपुः ॥२५॥

अपरं तेन पराभूता वयं। तद्यदि सन्धानकीर्त्तनं करिष्यामः। स भूयो ऽत्यन्तं कोपं करिष्यति। उक्तं च।

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया।
स्वेद्यमानज्वरं प्राज्ञः को ऽम्भसा परिषिञ्चति ॥२६॥
सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥२७॥

यदेवैतद्वदति रिपुर्बलवान्। तदप्यकारणं। उक्तं च यतः।

सोत्साहशक्तिसम्पन्नो हन्याच्छत्रुं लघुर्गुरुं।
यथा कण्ठीरवो नागे सुसाम्राज्यं प्रपद्यते ॥२८॥
मायया शत्रवो वध्या अवध्याः स्युर्बलेन ये।
यथा स्त्रीरूपमास्थाय हता भीमेन कीचकाः ॥२९॥

तथा च। मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विषः।
शष्पतुल्यं हि मन्यन्ते दयालुं रिपवो नृपं ॥३०॥
न याति शामनं यस्य तेजस्तेजस्वि तेजसा।
वृथाजातेन किं तेन मातुर्यौवनहारिणा ॥३१॥

या लक्ष्मीर्नानुलिप्ताङ्गी वैरिशोणितकुङ्कुमैः ।
कान्तापि मनसः प्रीतिं न सा धत्ते मनस्विनां ॥३२॥
रिपुरक्तेन संसिक्तारिस्त्रीनेत्राम्बुभिस्तथा ।
न भूमिर्यस्य भूपस्य का श्लाघा तस्य जीविते ॥३३॥

एवं सञ्जीवी विग्रहमल्लं विज्ञापयामास। अथ तच्छ्रुत्वानुजीविनमपृच्छत्। भद्र त्वमपि स्वाभिप्रायं निवेदय। सो ऽब्रवीत्। देव दुष्टः स बलाधिको निर्मर्यादश्च। तत्र तेन सह सन्धिविग्रहौ न युक्तौ। केवलं यानमर्हं स्यात्। उक्तं च यतः।

बलोत्कटेन दुष्टेन मर्यादारहितेन च ।
न सन्धिविग्रहौ नैव यानं विना प्रशस्यते ॥३४॥
द्विधाकारं भवेद्यानं भयत्रस्तप्ररक्षणं ।
एकमन्यज्जिगीषोश्च यात्रा लक्षणमुच्यते ॥३५॥
कार्तिके वाथ चैत्रे वा विजिगीषोः प्रशस्यते ।
यानमुत्कृष्टवीर्यस्य शत्रुदेशे न चान्यदा ॥३६॥
अवस्कन्दप्रदानस्य सर्वे कालाः प्रकीर्तिताः ।
व्यसने वर्तमानस्य शत्रोश्छिद्रान्वितस्य च ॥३७॥
स्वस्थानं सुदृढं कृत्वा शूरैश्चाप्तैर्महाबलैः ।
परदेशं ततो गच्छेत् प्रणिधिव्याप्तमग्रतः ॥३८॥
अज्ञातविवधासारतोयशस्यो व्रजेत तु यः ।
परराष्ट्रं स नो भूयः स्वराष्ट्रमधिगच्छति ॥३९॥

तत् ते युक्तं कर्तुमपसरणं। अन्यच्च न विग्रहं न सन्धानं बलिना तेन पापिना। अपरं कार्यकारणापेक्षयापसरणं क्रियते बुधैः। उक्तं च यतः।

यदपसरति मेषः कारणं तत् प्रहर्तुं ।
मृगपतिरपि कोपात् सङ्कुचत्युत्पतिष्णुः ।
हृदयविहितवैरा गूढमन्त्रोपचाराः ।